नित्यानुरागिणीसमाख्यया निबाहूरामकृत-
व्याख्यया समलंकृता

# विवाहपद्धतिः ।

माध्यन्दिनीयानां त्रैवर्णिकानामतीव श्रमेण दूरदेशानीतानेकपुस्तकपाठभेदा-
न्समालोच्य पंचनदीयप्राच्यमहाविद्यालयप्रधानाध्यापकैः

श्रीपंडितगुरुप्रसादशर्मभिः

संस्कृता ।

तस्या इयं तृतीयावृत्तिः

घगवे इत्युपाहबाल्कृष्णात्मजानंतशर्मणा

संशोधिता ।

सा च

## मेहरचंदलक्ष्मणदासमहोदयाभ्यां

मोहमय्यां

" नेटिव ओपिनियना " ख्यमुद्रणालये मुद्रयित्वा प्राकाश्यं नीता ।

वैक्रमाब्दाः १९६९ ।

नित्यानुरागिणीसमाख्यया निबाहूरामकृतव्याख्यया समलंकृता

# विवाहपद्धतिः ।

माध्यन्दिनीयानां त्रैवर्णिकानामतीव श्रमेण दूरदेशानीतानेकपुस्तकपाठभेदा-
न्समालोच्य पंचनदीयप्राच्यमहाविद्यालयप्रधानाध्यापकैः

श्रीपंडितगुरुप्रसादशर्मभिः

संस्कृता ।

तस्य इयं तृतीयावृत्तिः

घगवे इत्युपाह्वबालकृष्णात्मजानंतशर्मणा

संशोधिता ।

सा च

## मेहरचंदलक्ष्मणदासमहोदयाभ्यां

मोहमय्यां

" नेटिव ओपिनियना " ख्यमुद्रणालये मुद्रयित्वा प्राकाश्यं नीता ।

वैक्रमाब्दाः १९६९ ।

# संमतिः

इह खल्वशेषधरातले समुपात्तजनुषामनेकजातीयानां मनुजानां संस्कारदीक्षाविधौ भारतीभूषणानामूरीकृतवेदबोधिताऽखिलविधीनां द्विजानामेव प्राधान्यमिति सुनिपुणानां निश्चितमेव । तेषु च प्रचलिता यद्यपि बहुविधाः संस्कारविधयो निबन्धेषूपलभ्यन्ते यथा विज्ञानेश्वराचार्य्यैरष्टाचत्वारिंशत्संस्कारा उपवर्णिता अन्यैश्च षोडश अपरैस्तु तेषां दश एव मुख्या इति । त एवेदानींतनैः प्रायशोऽनुष्ठीयन्ते । पद्धतयश्च तत्तत्कर्म्मसामग्र्यसम्पादिका बाहुल्येन दशानामेव संस्काराणां मुद्रिता उपलभ्यन्ते । आस्तां निर्दिष्टपक्षाणामन्यतमस्योपादेयतायास्तदितरेषामनुपादेयतायाश्च विचारो नाम सर्वेषां यत्न सुनिश्चितप्रायं कर्म्मसु विवाहसंस्कारविधेः प्राधान्यं तदद्दष्टशास्त्राव्यवहाराणामन्त्यजादिजातीनामपि समानमेवेति । तत्प्रधानं कर्म्म सततमनुष्ठीयमानमप्यालस्यादिदूषितचित्तैः पल्लवग्राहिपाण्डित्ययुतैरुपेक्षया पद्धतिपुस्तकाशोधनपरैर्विकलतां नीतमिव दृष्ट्वा देशोपकारबुद्ध्या त्रैवर्णिकान्मुख्यतमेनोक्तेन विवाहसंस्कारेण साङ्गोपाङ्गेन वैधेनालंकर्तुं श्रीमान्मेहरचन्द्राभिधो लवपुरीयसंस्कृतपुस्तकालयाध्यक्षो बद्धपरिकरस्समुदयौक्षीत । उद्यमश्चास्य निभृतमहाशयो लक्ष्यते । यतस्त्रिवर्गसाधनं स्वनुष्ठितमेतत्संस्कारकर्म्म “ भार्य्यात्रिवर्गकरणं शुभशीलयुक्ता शीलं शुभं भवति लग्नवशेन तस्याः ” इति पूर्वाचार्य्यैरुपबृंहितप्रायम् । अथास्मिन्कर्म्मणि शुभोद्योगशालिनोऽस्य प्रोत्साहादिसंवर्द्धनगुणग्राहितयैतत्पुस्तकपरिक्रयेण स्वस्वोपकारप्रत्युपकृतिपरैः प्रशंसावादैः पारितोषिकरूपैः सहृदयमुख्यैः परितोषो विधेयः । स चापरदेशोपकारिकार्य्यनिर्मापणविधौ तस्याश्रान्तमनोवृत्तिमुद्भावयेदिति चक्रवृत्त्येव परिणामतः पुनःपुनरपि स्वदेशहितान्युद्भावयेदिति शम् ।

**महामहोपाध्याय श्रीपण्डित गुरुप्रसाद,**

**प्रधान अध्यापक,**

**पंजाब युनिवर्सिटी, कालिज लाहौर.**

॥ ॐ श्रीगणेशाय नमः ॥

# अथ विवाहपद्धतिः

नित्यानुरागिणीव्याख्यान्विता ।

सन्धिविग्रहमन्त्रेन्द्रो रुद्रदेवतनूद्भवः ।
भूमिपालशिरोरत्नरञ्जिताङ्घ्रिसरोरुहः ॥ १ ॥
सन्धिविग्रहकृच्छ्रीमद्दीरेश्वरसहोदरः ।
महन्महत्तरः श्रीमान् विराजति गणेश्वरः ॥ २ ॥

श्रीगणेशाय नमः ॥ अथ विवाहपद्धतिव्याख्या लिख्यते ।

अथ तावन्मङ्गलाचरणम् ।

मदोन्माद्यदुद्दामदिग्दन्तितुण्डो मदोन्माद्यदिन्दिन्दिरालीविराजन् ॥ अनायासमायासमानाशयन्नः स पायादपायादुमायास्तनूजः ॥ १ ॥ या कृता रामदत्तेन शुभा वाजसनेयिनाम् ॥ विवाहपद्धतिरतस्याष्टीकां कुर्वे सुखाप्तये ॥ २ ॥ अस्याः पूर्वं कृता टीका केनचिन्नृवरेण या । साऽपभ्रष्टा चिरंकालान्मूर्खहस्तगता सती ॥ ३ ॥ तामालोच्य स्वबुद्ध्याऽहं तथा मन्त्रार्थदीपिकाम् । पद्धत्यर्थं पठित्वैनां सुखाय कलयाम्यहम् ॥ ४ ॥ विवाहपद्धतेर्व्याख्या कृता यत्नाद्विलोक्यताम् । उल्लसिष्यन्ति ये सन्तो दूषयिष्यन्ति चापरे ॥ ५ ॥ तत्र तावत् पद्धतिकारकृतवस्तुनिर्देश-रूपविघ्नविनाशनस्वरूपनिरूपणमङ्गलस्य विवरणं क्रियते । सन्धिविग्रहे-त्यादि युग्मम् ॥ सन्धिः परस्परमेलनं विग्रहो विरोधो यमनु परस्परामर्दरूपं युद्धं सम्पद्यते सन्धिश्च विग्रहश्च तयोर्मन्त्रः स्वाभिप्रेतसाधनोचितो विचारः तत्रेन्द्रः ईश्वरः कुशाग्रबुद्ध्या द्वयोरुचितप्रवृत्तिज्ञानसमर्थः । रुद्रदेव

श्रीमता रामदत्तेन मन्त्रिणा तस्य सूनुना ।
पद्धतिः क्रियते धर्म्या रम्या वाजसनेयिनाम् ॥३॥

आद्यो यो महादेवः तस्य तनूद्भवः आत्मजः । यद्यपि तनूद्भव इति यौगिकलक्षणेनौरसे तनये वर्तते तथापि रूढिवृत्त्या क्षेत्रजेऽपि पुत्रे वृत्तिरस्य सम्भवति सरसिजवत् । अयं भावः । यथा सरसिजशब्दो यौगिकत्वेन जलजे प्रवृत्तस्तथा च रूढिवृत्त्या स्थलजेऽपि तद्वत् । अत्र प्रमाणम्—शब्दग्रहो व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्चेतिवचनादाप्तवाक्याच्छब्दग्रहेसिद्धे महाकाव्यकारकत्वान्महाकवेर्भारवेराप्तत्वेन वाक्यं प्रमाणं तदेव दर्शयति—उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिजसम्भवः पराग इति । भूमिपालेति ॥ राज्याधिकारे प्रतिदिनं बहुतरेषु राज्यकार्येषूत्पद्यमानप्रत्यूहसन्दोहनिवारणाय प्रतिक्षणं नमन्तो ये भूमिपाला महीपतयस्तेषां यानि शिरसो रत्नानि मुकुटमणयः तैः रञ्जितौ अतिविचित्रीकृतौ अङ्घ्रिसरोरुहौ पादपङ्कजौ यस्य सः ॥ १ ॥ सन्धिविग्रहेति ॥ संधिविग्रहा देवसेनानीत्वेन करोतीति असौ स चासौ श्रीमद्वीरेश्वरः कार्तिकेयस्तस्य सहोदरो भ्राता दैत्यदानवरणाजिरेषु कृतास्त्रत्वेन श्रीमन्तः शूरपदावाप्तिलब्धकीर्तिरूपकान्तियुता ये वीरा वह्न्यन्तकरवीन्दुवरुणाः तेषां ईश्वरः युद्धेषु प्रवर्तकः इति । महन्महत्तर इति । महन्तो ये व्यासवसिष्ठादयस्तेषु ये महान्तो ब्रह्मादयस्तेष्वतिशयेन महान् प्रणम्यत्वेन सर्व्वकार्येषु पूज्यत्वेन महत्तरः अत एव श्रीमान् सर्वसम्मतत्वेन लब्धकान्तिर्गणेश्वरो गणानामधिपतिः श्रीगणेशदेवो विराजति सर्वत्रौत्कर्ष्यादधिकं शोभत इत्यर्थः ॥ २ ॥

श्रीमतेति ॥ श्रीमता वेदज्ञानजनितपाण्डित्यकान्तियुतेन रामदत्तेन रामदत्ताभिधानेन मन्त्रिणा संहितामंत्रज्ञेन । तस्य सूनुनेति । तस्य पूर्वोक्तगुणविशिष्टस्य गणेशस्य सिंहो देवदत्त इतिवद्गौणीलक्षणया गणेशाभिधाने तत्पितरि तत्पदप्रवृत्त्या गणेशस्य रामदत्तजनकस्य सूनुना पुत्रेण वाजसनेयिनां यजुर्वेदकात्यायनसूत्रमाध्यंदिनीयशाखाव-

**तत्र क्रमः॥तावत्पूगीयज्ञोपवीतदानम् तत्र कन्या-भ्राता पुरोधा अन्यो ब्राह्मणो वा कश्चित् ।**

तां द्विजादीनां धर्म्या धर्मादनपेता रम्या मनोहरा पद्धतिः विवाहपद्ध-तिः पाणिग्रहणसाधिका पूर्वोत्तरक्रमकर्तव्यहस्तक्रियावाक्यसमुदायवे-दमन्त्रप्रणालिकापद्धतिः क्रियते कल्प्यत इति भावः ॥ विवाहे सति परकन्यागमनजन्यमहापापनिवृत्तिपूर्वकपितृतुष्टिहेतुमन्ततिवृद्धिस्वीयसुखपुण्य-फलरूपधर्मोपहितत्वाद्धर्म्येति विशेषणम् । विवाहे कृते कामभोगप्र-वृत्तावपि परिवादाभावेन रम्येति ॥ ३ ॥

**तत्र क्रम इति ॥** तत्र पद्धतौ यः क्रमः शास्त्रैर्निरूपितः स एव मुख्यः । न तदतिरिक्तः स्वकपोलकल्पितो न्यूनाधिको विधेयः। एतेन तदतिक्रमे दोषः यथोक्तक्रम एव विधेयो न पूर्वोत्तरविपर्यासः । तत्र कन्यादानमाहात्म्यम् । " भूमिदानं वृषोत्सर्गो दानं गजसुवर्णयोः । उभयतोवदनागोश्च तुलाया दानमुत्तमम् ॥ कन्यादानं जीवदानं शरणागतपालनम् । वेददानं महाराज महादानानि वै दश " इति ॥ " तत्रापि च महाबाहो कन्यादानमनुत्तमम् । कन्यादानात्परं दानं न भूतं न भविष्यति "॥ इति राजमार्तण्डे निरूपणात् । " युगान्तरेष्वश्वमेधो यथा च क्रतुगणमतः । विधिवत्कन्यकादानमश्वमेध-समं कलौ "॥ इति गोविन्दराजोक्तम् ॥ " तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च कलौ ते सन्ति जाह्नवि । वेदतन्त्र-प्रणीतानि यानि मन्त्राणि सर्वशः ॥ वेदमातुर्जपे तेषां फलं प्रोक्तं कलौ युगे । राजसूयोऽश्वमेधश्च महादानानि यानि च । तेषामपि फलं प्रोक्तं कन्यादाने कलौ युगे "॥ इति पद्मपुराणोक्तम् ॥ " चिन्तामणीनां गिरयः कल्पवृक्षाः सहस्रशः । व्रजाश्च कामधेनूनां तत्र गच्छेद्दुहितृदः ॥ काञ्चनानि च हर्म्याणि नद्यः पायसकर्दमाः । फलान्यमृतकल्पानि तत्र गच्छेद्दुहितृदः " । इति मार्कण्डेयप्रोक्तम् ॥ यतो महाफलदं कन्यादानं

## श्रीमता रामदत्तेन मन्त्रिणा तस्य सूनुना ।
## पद्धतिः क्रियते धर्म्या रम्या वाजसनेयिनाम् ॥३॥

आद्यो यो महादेवः तस्य तनूद्भवः आत्मजः । यद्यपि तनूद्भव इति यौगिकलक्षणेनौरसे तनये वर्तते तथापि रूढिवृत्त्या क्षेत्रजेऽपि पुत्रे वृत्तिरस्य सम्भवति सरसिजवत् । अयं भावः । यथा सरसिजशब्दो यौगिकत्वेन जलजे प्रवृत्तस्तथा च रूढिवृत्त्या स्थलजेऽपि तद्वत् । अत्र प्रमाणम्–शब्दग्रहो व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्चेतिवचनादाप्तवाक्याच्छब्दग्रहेसिद्धे महाकाव्यकारकत्वान्महाकवेर्भारवेराप्तत्वेन वाक्यं प्रमाणं तदेव दर्शयति–उत्फुल्लस्थलनलिनीवनादमुष्मादुद्भूतः सरसिजसम्भवः पराग इति । **भूमिपालेति** ॥ राज्याधिकारे प्रतिदिनं बहुतरेषु राज्यकार्येषूत्पद्यमानप्रत्यूहसन्दोहनिवारणाय प्रतिक्षणं नमन्तो ये भूमिपाला महीपतयस्तेषां यानि शिरसो रत्नानि मुकुटमणयः तैः रञ्जितौ अतिविचित्रीकृतौ अङ्घ्रिसरोरुहौ पादपङ्कजौ यस्य सः ॥ १ ॥ **सन्धिविग्रहेति** ॥ संधिविग्रहा देवसेनानीत्वेन करोतीति असौ स चासौ श्रीमद्वीरेश्वरः कार्तिकेयस्तस्य सहोदरो भ्राता दैत्यदानवरणाजिरेषु कृतास्त्रत्वेन श्रीमन्तः शूरपदावाप्तिलब्धकीर्तिरूपकान्तियुता ये वीरा वह्न्यन्तकरवीन्दुवरुणाः तेषां ईश्वरः युद्धेषु प्रवर्तकः इति। महन्महत्तर इति। महन्तो ये व्यासवसिष्ठादयस्तेषु ये महान्तो ब्रह्मादयस्तेष्वतिशयेन महान् प्रणम्यत्वेन सर्व्वकार्येषु पूज्यत्वेन महत्तरः अत एव श्रीमान् सर्वसम्मतत्वेन लब्धकान्तिर्गणेश्वरो गणानामधिपतिः श्रीगणेशदेवो विराजति सर्वत्रौत्कर्ष्यादधिकं शोभत इत्यर्थः ॥ २ ॥

**श्रीमतेति** ॥ श्रीमता वेदज्ञानजनितपाण्डित्यकान्तियुतेन रामदत्तेन रामदत्ताभिधानेन मन्त्रिणा संहितामंत्रज्ञेन । तस्य सूनुनेति । तस्य पूर्वोक्तगुणविशिष्टस्य गणेशस्य सिंहो देवदत्त इतिवद्गौणीलक्षणया गणेशाभिधाने तत्पितरि तत्पदप्रवृत्त्या गणेशस्य रामदत्तजनकस्य सूनुना पुत्रेण वाजसनेयिनां यजुर्वेदकात्यायनसूत्रमाध्यंदिनीयशाखाव-

**तत्र क्रमः॥तावत्पूगीयज्ञोपवीतदानम् तत्र कन्या-भ्राता पुरोधा अन्यो ब्राह्मणो वा कश्चित् ।**

तां द्विजादीनां धर्म्या धर्मादनपेता रम्या मनोहरा पद्धतिः विवाहपद्धतिः पाणिग्रहणसाधिका पूर्वोत्तरक्रमकर्तव्यहस्तक्रियावाक्यसमुदायवेदमन्त्रप्रणालिकापद्धतिः क्रियते कल्प्यत इति भावः ॥ विवाहे सति परकन्यागमनजन्यमहापापनिवृत्तिपूर्वकपितृतुष्टिहेतुसन्ततिवृद्धिस्वीयसुखपुण्यफलरूपधर्मोपहितत्वाद्धर्म्येति विशेषणम् । विवाहे कृते कामभोगप्रवृत्तावपि परिवादाभावेन रम्येति ॥ २ ॥

तत्र क्रम इति ॥ तत्र पद्धतौ यः क्रमः शास्त्रैर्निरूपितः स एव मुख्यः । न तदतिरिक्तः स्वकपोलकल्पितो न्यूनाधिको विधेयः। एतेन तदतिक्रमे दोषः यथोक्तक्रम एव विधेयो न पूर्वोत्तरविपर्यासः । तत्र कन्यादानमाहात्म्यम् । " भूमिदानं वृषोत्सर्गो दानं गजसुवर्णयोः । उभयतोवदनागोश्च तुलाया दानमुत्तमम् ॥ कन्यादानं जीवदानं शरणागतपालनम् । वेददानं महाराज महादानानि वै दश " इति ॥ " तत्रापि च महाबाहो कन्यादानमनुत्तमम् । कन्यादानात्परं दानं न भूतं न भविष्यति "॥ इति राजमार्तण्डे निरूपणात् । " युगान्तरेष्वश्वमेधो यथा च क्रतुराणतः । विधिवत्कन्यकादानमश्वमेधसमं कलौ "॥ इति गोविन्दराजोक्तम् ॥ " तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरिक्षे च कलौ ते सन्ति जाह्नवि । वेदतन्त्रप्रणीतानि यानि मन्त्राणि सर्वशः ॥ वेदमातुर्जपे तेषां फलं प्रोक्तं कलौ युगे । राजसूयोऽश्वमेधश्च महादानानि यानि च । तेषामपि फलं प्रोक्तं कन्यादाने कलौ युगे "॥ इति पद्मपुराणोक्तम् ॥ " चिन्तामणीनां गिरयः कल्पवृक्षाः सहस्रशः । व्रजाश्च कामधेनूनां तत्र गच्छेद्दुहितृदः ॥ काञ्चनानि च हर्म्याणि नद्यः पायसकर्दमाः । फलान्यमृतकल्पानि तत्र गच्छेद्दुहितृदः " । इति मार्कण्डेयप्रोक्तम् ॥ यतो महाफलदं कन्यादानं

## उदङ्मुखः प्रत्यङ्मुखो वा उपविश्य प्राङ्मुखस्य वरस्य गन्धाक्षतैरर्च्चितस्य मुखदत्तखार्ज्जूरादिफलस्य स्वयं पूगीफलयज्ञोपवीतमादाय ।

अतस्तद्दानं त्रिधा । वाग्दानं कन्यादानं खट्वादिपारिबर्हदानं च इति त्रिधा दानम् । यदाह वृद्धमनुः । " वरं सम्पूज्य खार्जूरं फलं दत्वा मुखे तथा । तस्मिन्कालेऽग्निसांनिध्ये पिता तुभ्यं प्रदास्यति ।। इति प्रतिज्ञया यच्च कन्याभ्रात्रादिना च सा । वाचा यद्दीयते तुल्ये वाग्दानं प्रथमं स्मृतम् ॥ वरं सम्पूज्य विधिना वेद्यामग्निं निधाय च । दात्रा प्रदीयते यच्च कन्या सङ्कल्पवाक्यतः । द्वितीयं कन्यकादानं तत्तु प्रोक्तं महर्षिभिः ॥ वधूवरौ च खट्वायां मण्डपे सन्निवेश्य च । पारिबर्हं महद्दत्वा जलेन च विसर्ज्जनम् । तृतीयं कन्यकादानं व्यासाद्या मुनयो जगुः " इति ॥ तत्र प्रथमं वाग्दाने विधिः ॥ तत्र कन्याभ्रातेति ॥ " ऋत्विक् पुरोहितः पुत्रो भार्य्या भृत्यः सखा तथा । एतद्द्वारा कृतं यच्च तत्कृतं स्वयमेव हि ॥ इति मनुस्मरणात् । कन्याभ्राता कन्याप्रदपुत्रः पुरोधाः सोऽपि कन्याप्रदस्यैव अन्यो ब्राह्मणो वा । कश्चिदिति तस्यैवर्त्विगादिरित्यर्थः । स तत्र गत्वा ॥

**उदङ्मुख इति** ॥ उदङ्मुखः उत्तराभिमुखः प्रत्यङ्मुखः पश्चिमाभिमुखो वा स्थित्वेत्यर्थः ॥ " पूज्यश्च प्राङ्मुखो यत्रोदङ्मुखः पूजको भवेत् । अर्च्चयेत् देवमभित इति प्रत्यङ्मुखश्च सः "। इति मनुवचनात् ॥ " प्रत्यङ्मुखं स्थापयेत्तु देवं पूज्यं तथैव च । पूजकः सम्मुखस्तस्य इति धर्म्मानुशासनम् "।। इति वरस्य पूज्यत्वेन प्रत्यङ्मुखत्वे सांसिद्धेऽपि " प्रत्यङ्मुखं स्थापयेत्तु देवं पूज्यं वरं विना । वरस्तु प्राङ्मुखः पूज्यः पूजकः स्यादुदङ्मुखः "।। इति व्यासस्मृतिः । "प्रत्यङ्मुखान्पूजनीयदेवांस्तत्सम्मुखस्थितः।। अर्च्चयेन्नित्यमेवेत्थं विधिरित्येव सम्मतः । स्थित्वा चाभिमुखं नार्च्चे-

**तस्मिन्कालेऽग्निसान्निध्ये स्नातः स्नाते ह्यरोगिणि ॥ अव्यङ्गेऽपतितेऽक्लीबे पिता तुभ्यं प्रदास्यति ॥ इति पठित्वा हस्ते दद्यात् ।**

च्छम्भुं जामातरं तथा ॥ इन्द्रं चोदङ्मुखं स्थाप्य स्वयं प्राङ्मुखसंस्थितः । उदङ्मुखोऽर्चयेद्दाता वेदिस्थं प्राङ्मुखं वरम् " ॥ इति पराशरवचनात् प्राङ्मुखवरस्य पूर्वं गन्धाक्षतैरर्च्चितस्य मुखदत्तखार्जूरादिफलस्य खार्जूरादिफलभक्षणमपि मङ्गलार्थम् । यतः " नालिकेरफलं चैव तदन्तर्भक्ष्यमप्युत । खर्जूरादिफलं राजन् विवाहे मङ्गलप्रदम् " । इति भृगुवचनात् विवाह इत्युपलक्षणं विवाहादिसर्वमङ्गलकार्य्येष्वपीत्यर्थः ॥ **स्वयमिति** ॥ स्वयं कन्याभ्रात्रादिः पूगीयज्ञोपवीतमादाय गृहीत्वा इति पठित्वा इति वक्ष्यमाणमुच्चार्य्य वरस्य हस्ते दद्यात् वरवृतिं कुर्यादित्यर्थः । " ययोरेव समं वित्तं ययोरेव समं कुलम् । तयोर्विवाहो मैत्री च न तु पुष्टविपुष्टयोः" इति महाभारते व्यासोक्त्या । " सुशीलश्चारुबुद्धिश्च व्यवहारपटुः क्षमी । उदारो वाक्पटुर्वाग्मी गुणयुक्तो वरो मतः ॥ परम्परासम्बन्धकुलजातो महाकविः । कान्तः सुलक्षणः श्रीमान् मातृपितृयुतो वरः "॥ इति गोविन्दराजोक्तवरलक्षणसम्पन्नस्य वरस्य वृतिं कुर्यात् इति ॥

अथ वरवृतौ प्रतिज्ञावाक्यमाह—

**तस्मिन् काले इति** ॥ तस्मिन् प्रसिद्धे सर्वाभीष्टे काले विवाहसमये तच्छब्दस्य पूर्वप्रसिद्धयोः परामर्शकत्वात् । अतः तस्मिन् प्रसिद्धे विवाहे सति । किञ्चाग्निसान्निध्येऽग्निसामीप्ये सति अग्निं साक्षीकृत्येत्यर्थः । किञ्चारोगिणि सति । " वाताश्मरीकुष्ठमेहमहोदरभगन्दराः । अर्शश्च ग्रहणी चैव महारोगाः सुदुस्तराः " । इति चिकित्साशास्त्रोक्तरोगरहिते सतीत्यर्थः । किञ्चाव्यङ्गे सति, व्यङ्गरहिते सति व्यङ्गत्वं द्विवि-

धं योनिजातिसम्बन्धकृतमेकं देहाङ्गभङ्गकृतं चापरं इति । तत्र धृता विवाहिता दासीति त्रिविधा निषिद्धस्त्रियस्तासु धृता विधवा या प्रीत्या चाटुकारादिना स्वगृहमानीय केनचिद्भार्य्याभावेन रक्षिता सा धृता उच्यते। विवाहिता पूर्वमपि विवाहविधिना कुत्रचिद्विवाहिता तत्र तत्पतिमरणेन बालविधवात्वे सति लोभोपहितचेतसो महाज्ञानयुक्तास्तत्पितरः कुत्रचिद्देशे गत्वा कुमारीवेशेन तां प्रदर्श्य तत्र केनाऽपि पुनर्विवाहिता विवाहितेत्युच्यते । दासी मूल्यक्रीता पूर्वं गृहपरिचारिका पश्चाद्यौवनाक्रान्तदेहां तामालोक्य कामवशात्तामङ्कमारोप्य भार्य्याभावेन गृहे रक्षिता सा दासीत्युच्यते । तदुद्भवसन्ततिसम्बन्धकरकुलसम्बन्धे कृते योनिव्यङ्गत्वं स्वजातेर्हीनजात्या सम्बन्धे कृते जातिव्यङ्गत्वम्, एतद्द्वयमेव लक्षीकृत्य योनिजातिसंबन्धकृतमेकं व्यङ्गत्वमुक्तम् । चक्षुश्चरणकटिभग्नत्वेनान्धपङ्गुप्रभृतिकं देहव्यङ्गत्वं तदभावोऽव्यङ्गत्वं तस्मिन् सति, एतल्लक्षणै रहिते त्वयि सतीति तात्पर्य्यार्थः । किञ्चाऽपतिते सति । "ब्रह्म[१]हा मद्यपस्तेनस्तथैव गुरुतल्पगः । एते महापातकिनो यश्च तैस्सह संवसेत्"॥ इति । ब्रह्महत्यादिके पापे जातिभ्रंशकरे तथा । वृषलीगमनेऽत्यर्थं सावित्रीविरहेऽपि च । अभक्ष्यभक्षणे चैव पतितो भवति ध्रुवम् ॥ इति कालादर्शादौ पतित्वनिरूपणात्तल्लक्षणरहितेऽपतिते सतीत्यर्थः । किञ्चाक्लीबे क्लीबत्वरहिते सति । भस्मनि होमकरणात्षंढे कन्याप्रदानतः । कुलधर्म्मपरित्यागान्नरके नियतं वसेत् ॥ इत्यापस्तम्बवचनात्त्वयि षण्ढलक्षणरहिते सति पिताऽस्या जनकस्तुभ्यं प्रदास्यति कन्यादानं करिष्यति पूर्वोक्तदूषणेषु एकेनाऽपि दोषेण दुष्टे त्वयि सति न दास्यतीति प्रतिज्ञादृढत्वं क्रियते । इत्थं प्रतिज्ञादाढर्य्येन वरस्य हस्ते पूगीयज्ञोपवीतदानं पुरोहितब्राह्मणादिद्वारा पूग्यादिदानपक्षे पितेत्यस्य स्थाने दातेत्युच्चारयेत्

१ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्तीमानि पापानि तत्संसर्गश्च पञ्चमः ।

**ॐ ऋतवस्था ऋतावृधा ऋजुष्यस्था ऋतावधा घृतच्युतो मधुच्युतो विराजो नाम कामदुघाः अक्षीयमाणाः ॥ इति पठित्वा शिरस्यक्षतादिकं दद्याद्वरः भ्रातृव्यतिरिक्तदानपक्षे पितेत्यत्र दातेत्युच्चारयेत् । अथ सर्वेभ्यो वेदाध्ययनश्रवणक्रियाव्यतिरिक्तक्रियानिवृत्तयेऽक्षतानि दत्वा तारस्वरेण वेदोच्चारणं कुर्य्यात्।**

**ॐ ऋतवस्था इति ॥** भोः कन्याप्रदाः यूयं ऋते सत्येऽवतिष्ठन्ति इति ऋतवस्थाः सत्यप्रतिज्ञाः । किञ्च ऋतावृधाः ऋतेन सत्येन आ समन्तात् वर्धतीति ऋतावृधाः । इगुपधेति कः प्रत्ययः । किञ्च ऋजुष्ये सन्मार्गे तिष्ठन्तीति ऋजुष्यस्थाः । "ऋजौ ऋजुष्यं सरलं कोमलं मृदुकञ्च तत्" इति रंतिकोषः । किञ्च ऋतावधाः ऋताः सत्या अवधयो मर्य्यादाः समया वा येषां ते मर्यादापालका इत्यर्थः । डान्तः प्रयोगः । किञ्च घृतच्युतः यद्गृहेषु भूरितरविद्यमानत्वेन घृतानि श्च्योतन्तीति घृतच्युतः । घृतशब्देन दुग्धदधितक्रपायसनवनीतादिकं लक्ष्यते । किञ्च मधुच्युतः मधूनि मधुराणि गुडशर्करादीनि सर्वाणि स्रावयन्ति विकिरन्ति यद्गृहेषु ते मधुच्युताः । च्युतिः क्षरणे क्विबन्तं पदम् । किञ्च विराजः विशेषेण राजन्ते इति विराजः । विपूर्वो राजृ दीप्तौ क्विबन्तं पदं नामेति प्रसिद्धम् । किञ्च कामदुघाः कामा मनोऽभिलषिता विषयास्तेषां दुघाः प्रपूरका इत्यर्थः । किञ्च अक्षीयमाणाः कदाचिदपि ये न क्षीयन्ते अक्षीणकोषभाण्डाराः । ईदृशा भवन्तो भवन्त्विति आशिषो दत्वा पूग्यादि शिरसि निधापयेद्वरः । इति शिरसि स्थापनेन भवत्सम्बन्धेन वयं सर्वेषामुत्तमाङ्गेषु मुकुटमणय इव भविष्याम इति सूचितम् ।

**अथ सर्वेभ्य इति ॥** अथाक्षतदानप्रयोजनपूर्वकशिष्टाचारत्वेनाक्षतदा-

**ॐ गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम आहमजानि गर्भध मा त्वमजासि गर्भधम् ॥ १ ॥**

नमाह ॥ अथशब्दो मङ्गलार्थोऽनन्तरार्थश्च ग्रन्थादौ मङ्गलमाचरणीयमिति शिष्टाचारः शिष्टाचारप्रतिपालनाय मङ्गलार्थोऽयमथशब्दः अनन्तरार्थशब्दे तु अनन्तरं निषेकादिनवकर्म्मानन्तरं विवाहारम्भ इति एवमर्थ ऊहनीयः । अथ मङ्गलहेतुकविवाहारम्भसमये वेदोच्चारणम् । तारेण स्वरेण कण्ठस्वरेण हस्तस्वरेण च यथामति कुर्यात् । तथा च योगियाज्ञवल्क्यः । " स्वरस्तु द्विविधः प्रोक्तो वेदोच्चारणकर्म्मणि । कण्ठस्वरो हस्तस्वरो गौणमुख्यप्रभेदतः ॥ तारस्वरेण द्वावेव भवेतामिति निश्चयः ॥ वेदस्योच्चारणं कुर्य्यात् यथामति च वेदवित् । सर्वविघ्नविनाशाय सर्वारम्भेषु सिद्धये " इति ॥ किं कृत्वा सर्वेभ्यस्तत्रागत्य स्थितेभ्यो हस्तेष्विति शेषः । अक्षतानि दत्वा कस्यै? वेदाध्ययनश्रवणक्रियाव्यतिरिक्तक्रियानिवृत्तये । वेदस्याध्ययनं पठनम्, श्रवणं पठनज्ञानाभावे आकर्णनपरत्वञ्च, तद्रूपा याः क्रिया इति ताभ्यो भिन्नास्तद्व्यतिरिक्ताः याः क्रियास्तासां निवृत्तये परित्यागायेत्यर्थः । अथ वेदोच्चारणं विघ्नाविध्वंसकगणेशस्तुतिपूर्वकषडंगान्तर्गतशिवसंकल्पात्मकाध्यायस्य वेदत्वेनोच्चारणं इत्यर्थः ।

**गणानां त्वेति** ॥ हे मम वसो मदीयधन श्रीगणेशदेव गणानां पतिं त्वा त्वां हवामहे आवाहयामः । ह्वेञ् आह्वाने स्पर्धायाञ्च भ्वादिगणे ह्वयतीत्यादिरूपं दृशेः पश्यादेशवत् ह्वयतेर्हवादेशेन हवामहेप्रयोगनिष्पत्तिः । गण्यन्ते प्रशस्तत्वेनेति गणाः श्रेष्ठास्तेषां मध्ये ये गणाः प्रशस्ततरास्तेषां पतिमीश्वरमित्यर्थः । सकलप्रशस्ततरेश्वरमिति

**नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः**

भावः । किञ्च प्रियाणां प्रेष्ठानामिन्द्रादिदेवानां यज्ञाधिपतित्वेन तेषां ये प्रेयांसः कार्तिकेयादयः तारकादिवधजनितसुखहेतुभूतत्वात् तेषां पतिं युद्धारम्भे त्वदाराधनेन विघ्नध्वंसपूर्वकविजयप्रदत्वेन पतिफलप्रदातारमीश्वरं त्वा हवामहे । किञ्च निधीनां निधिपतिं त्वा हवामहे निधयो धनादीनि तेषां मध्ये ये निधयोऽतिशयानन्तसुखभोगप्रवर्त्तिका योगसिद्धयस्तेषां पतिं दातारं त्वा हवामहे मदीये कार्य्ये जनितजायमानजनिष्यमाणानेकविधप्रत्यूहसन्दोहविध्वंसनपूर्वककार्य्यसिद्धिहेतवे गणेशाव्हानमन्त्ररूपस्तुतिः क्रियते इति भावः । किञ्च गणपते अहं त्वयाऽजानि उत्पादितः कीदृशोऽहं । गर्भधम् मात्रा गर्भे धीयते यः स गर्भधम् । लिङ्गव्यत्ययः छान्दसः गर्भध इत्यर्थः । किञ्च हे अज अनादे त्वं गर्भधं गर्भधो मासि न भवसि एतेन जन्मविकारकथनेन तदुत्तरत्वेन सर्वेषां यथाक्रमसम्भवात् षड्भावविकारवान् परतन्त्रः शरीरीति व्यज्यते त्वं तु विकाराभाववान् निर्विकारत्वेन स्वतन्त्रः ईश्वरः अत एव सर्वं विधातुं समर्थ इति सूचितम् ॥

**नमो गणेभ्य इति** ॥ वः युष्माकं गणेभ्यो नमः गणपतिभ्यश्च वो युष्मभ्यं नमः वःपदस्य तन्त्रत्वेन द्विविभक्त्यन्तार्थवत्त्वं एवं वो युष्माकं व्रातेभ्यो राशीभूतेभ्यः समूहेभ्यो नमः व्रातपतिभ्यश्च वो युष्मभ्यं नमः तथा वो गृत्सेभ्यो विघ्नकरेभ्योऽथवा विषयलम्पटेभ्यो मेधाविभ्यो वा नमः गृत्सपतिभ्यस्तत्पालकेभ्यश्च वो नमः तथा च वो विविधरूपेभ्यो विकृतरूपेभ्यो वा नमः यद्वा वो विरूपेभ्यो विशिष्टरूपेभ्यो नमः विश्वरूपेभ्यः

**सहस्तोमाः सहछन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः ॥ पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन् ॥ ३ ॥**

सर्वरूपेभ्यश्च वो युष्मभ्यं नमोऽस्तु सर्वत्र व इत्यादेशाविशेषस्य द्व्यर्थत्वमेव ज्ञेयम् ॥ इति गणेशस्तुतिः ॥

अथर्षिसृष्टिप्रतिपादकमन्त्रव्याख्या ऋषिनिरूपणमन्त्रोऽपि मङ्गलप्रदः ॥

**सहस्तोमा इति** ॥ सप्त ऋषयो भरद्वाजकश्यपगौतमात्रिविश्वामित्रजमदग्निवसिष्ठाः । पूर्वेषां कल्पान्तराणि कारिणां पन्थानं अनुदृश्यावलोक्यान्वालेभिरे अन्वारभन्त सृष्टिं कृतवन्त इत्यर्थः । रलयोःसावर्ण्यमिति अन्वालेभिर इति अलङ्कारार्थं रस्य लः । ऋषयः कीदृशाः । सहस्तोमाः । स्तोमा चिकीर्षा तया सह वर्त्तमानाः । यद्वा स्तोमाः कारणसमुदायास्तैः सहिताः सृष्टिकारणसमुदायसमन्वितत्वेनापि तेषां चिकीर्षैव स्फुटायते । चिकीर्षां विना तेषां कारणसमुदायैकीकरणं न घटते । पुनः कीदृशाः सहछन्दसः छन्दोभिः सहिताः सर्वज्ञा इति एतेन तेषां ज्ञानवत्त्वं प्रतिपादितम् । पुनः कीदृशा आवृतः आशब्देन कर्म्मोच्यते तद्वृतः अथवा आवर्तयन्ति स्वकर्माणीत्यावृतः श्रद्धासत्यप्रधानानां तपोरूपात्मकर्म्मणां अनुष्ठातारः । एतेन विशेषणेन कृतिमत्त्वं तेषां निरूपितम् । पुनः कीदृशाः सहप्रमाः । प्रमाणसंसाधितं यथार्थज्ञानं प्रमा तया सह वर्त्तमानाः सहप्रमाः । समासे सत्यपि सहस्य सादेशाभावः छान्दसः एतैर्विशेषणैः चिकीर्षाज्ञानकृतिमत्त्वं कर्त्तृत्वं इति कर्त्तृत्वलक्षणं घटते तेन तेषामपि सृष्टिकर्त्तृत्वं प्रतिपादितम् । पुनः कीदृशा दैव्याः प्रजापतित्वेन देवताभिमानिनः ईश्वरत्वेन सृष्टिं कर्त्तुं समर्था इत्यर्थः । पुनः

**यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवेति ॥ दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥**

कीदृशाः धीरा धियं रान्ति गृह्णन्ति इति धीराः एतेन ज्ञानसृष्टिरुक्ता । अयं भावः । कर्त्तृभिः प्रथमं बुद्धया ज्ञानकोटिपदार्थाः सृज्यन्ते पश्चान्मनोमयकल्पितानुसारेण द्रव्यमयाः सृज्यन्ते इति कथमन्वरेभिरे रथ्यो न रश्मीन् रथे साधुः रथ्यः सारथिः नकार उपमार्थः रश्मीनिव अथवा अनरश्मीन् रथरश्मीन् अनः शकटे च मातरि इति सकारलोपश्छान्दसः यथोत्तमसारथिरिष्टदेशप्राप्त्यर्थं अश्वनियमनाय रश्मीनन्वारभते एवं तेऽपि कारणैः स्वसृष्टिं कृतवन्त इत्यर्थः ॥ इति ऋषिसृष्टिवर्णनेन ऋषिस्तुतिरपि मङ्गलार्थैवेत्यर्थः ॥ ३ ॥ इति मङ्गलरूपस्तुतिः सम्पूर्णा ॥ अथ शिवसङ्कल्पव्याख्या सा मङ्गलार्थैव शिवसङ्कल्पपदेनैव मङ्गलबोधात् ॥

**यज्जाग्रत इति ॥** यन्मनो जाग्रतः पुरुषस्य दूरमुदैति दूरं गच्छति नानाविषयेषु सञ्चरतामिन्द्रियाणां सहकारित्वेनेतस्ततस्संचारित्वादित्यभिप्रायः । उरप्यर्थे तन्मनः सुप्तस्य निद्रितस्यापि तथैवेति जग्रज्जन्यः स्वप्न इत्युक्तेः । स्थूलेन्द्रियेषु स्वस्वगोलकेषु विश्रान्तेषु व्यापाराभावेऽपि स्वकल्पितविषयेषु सूक्ष्मेन्द्रियैः सह तथैव प्रसरसम्भवात् । कीदृशं मनः दैवं देवस्वरूपं पुनः कीदृशं मनः ज्योतिषां तैजसानामिन्द्रियाणामेकं मुख्यं अद्वितीयं सर्वकार्य्याणां तदधीनत्वात् इति भावः । पुनः कीदृशं दूरंगमं दूरगामि व्यवहितविषये साधारणप्रवृत्तित्वात् तन्मे मम मनः शिवसङ्कल्पमस्तु शिवाः सत्त्वात्मकाः सङ्कल्पा वृत्तयो यस्य तत् यद्वा शिव सङ्कल्पोऽभिलाषो ब्रह्मलोकादौ वासो यस्य तत् ॥

**येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विद-धेषु धीराः ॥ यदपूर्वं यक्ष्यमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥**

**यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्र-जासु ॥ यस्मान्नर्ते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥**

**येन कर्म्माणीति** ॥ येन मनसा अपसो मनीषिणः कर्म्मकुशला-स्तपस्विन इत्यर्थः । अप इति कर्मनाम [ निघं० २. १ ] अपसस्तत्र कुशलत्वे ‘ अस्मायामेधास्रजो विनिः’ इति विनिः । अपास्विन्शब्दस्तस्मिन् “ विन्मतोर्लुक् ” इति इष्ठनोऽभावेऽपि छान्दसो विन्प्रत्ययस्य लुक् तेन अपसः कर्म्मवन्तः कर्म्मकुशलाः यज्ञे कर्म्माणि कृण्वन्तीत्यर्थः । स्वादिगणे रूपम् ॥ कीदृशा मनीषिणः विदथेषु धीराः पण्डिताः विधी-यन्ते कल्प्यन्ते इति विदधा यज्ञाः यज्ञसाधनानि वा ज्ञानानि वा तेषु । किञ्च यन्मनः अपूर्वं न पूर्वं कारणं यस्य तत् नित्यमित्यर्थः । न्यायमते मनसो नित्यत्वात् वेदेषु वेदान्तमतस्य प्रधानत्वात् अपूर्वमद्भुतं वेति । किञ्च यक्ष्यं पूज्यं तथा च प्रजानां प्रकर्षेण जायन्ते इति प्रजा देहास्ते-षामन्तरन्तर्वर्त्ति तन्मे मनः शिवसङ्कल्पमस्तु इत्यर्थः ॥

**यत्प्रजानमिति** ॥ यन्मनःप्रज्ञानं बुद्धिरूपम् सर्वव्यवहारहेतुकं ज्ञानं मनस एव निश्चयात्मिका वृत्तिर्बुद्धिः प्रकृष्टं स्वरूपात्मकं ज्ञानं यस्मात् तत्प्रज्ञानं इति वा वैराग्येण संसृतेरुपरतत्वेन निर्विकारे मनसि सति शुद्धबोधेच्छा वृत्तिर्भवतीति उत समुच्चये यन्मनः चेतः चित्तं चेत-नाया उपलब्धेर्हेतुः स्मरणात्मकं ज्ञानं । धृतिश्च धैर्य्यं यत् अन्तः अन्तरि-

**येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् ॥ येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥ यस्मिन्नृचः सामयजूꣳषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिंश्चित्तꣳ सर्वमोतं प्रजानां तन्मेमनः शिवसङ्कल्पमस्तु ॥ ७ ॥**

न्द्रियं यत् ज्योतिः सुखाद्युपलब्धिसाधनत्वेन सुखादीनां प्रकाशकं सुखं दुःखं धृतिरधृतिः संशयं विपर्य्ययकामः सर्वं मन एवेति श्रुतेः । यच्च प्रजासु ( उक्तव्याख्यानुसारेण देहेषु ) जनेषु वा विनाशधर्म्मिषु अमृतमविनाशि भवत्यनेन तस्य ब्रह्मांशभूतजीवाङ्गित्वमुक्तम् यस्मान्मनस ऋते किञ्चन कर्म्म न क्रियते । केनापीति शेषः । सर्वकर्म्मकारणं मन एवेति भावः । तन्मे मनः शिवसङ्कल्पमस्तु ॥

येनेदमिति ॥ येन मनसा इदं वर्त्तमानं भूतमतीतं भविष्यद्भावि सर्वं भुवनं प्रपञ्चजातं परिगृहीतं परितः सर्वतो ज्ञातं त्रिकालसम्बद्धवस्तुषु भवति मनःप्रवृत्तमित्यर्थः । कीदृशेन येन अमृतेन नित्येन सुखेन वा येन मनसा सप्त होतारो यस्मिन स सप्तहोता अग्निष्टोमोनाम यज्ञस्तायते विस्तार्य्यते तन्मे मनः शिवसङ्कल्पमस्तु । यस्मिन्मनसि ऋचः ऋग्वेदः साम सामवेदः यजूंषि यजुर्वेदः नाम एते प्रतिष्ठिता आश्रिताः सन्ति सर्वेषां वेदानामधिष्ठानं यदित्यर्थः । कस्मिन् के इव रथनाभौ शकटचक्रमध्यदेशीयस्थूलकाष्ठे आरा उभयतो नेम्यन्तर्गताल्लं वायमानाः काष्ठका इव यस्मिन् सर्वं प्रजानां चित्तं संज्ञानं ओतं सम्बद्धम् तन्मे मनः शिवसङ्कल्पं शिवसङ्कल्पात्मकं शान्तव्यापारं अस्त्वित्यर्थः ॥

**सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीषुभिर्वाजिन इव हृत्प्रतिष्ठं यदजरं जविष्टं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ८ ॥**

**[ अ. २९. कं. १८ ]**

**अथ स्वस्त्ययनोच्चारणम् ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १ ॥**

**सुषारथिरिति** ॥ यन्मनो मनुष्यान् लोकान्मनुष्यान् इत्युपलक्षणम् सर्वानेव देवदानवर्षिप्रभृतीन् स्थूलसूक्ष्मान् जीवान् नेनीयते हिताहितविषयेषु अतिशयेन प्रवर्त्तयति निवर्तयति च कः कानिव सुषारथिरुत्कृष्टसारथिरभीषुभिः रश्मिभिरश्वानिव यथोत्कृष्टसारथिरश्वान् प्रग्रहनियन्त्रितान् समेषु स्वहितविषयेषु प्रवर्तयाति विषमेषु निवर्त्तयति च कीदृशानश्वान् वाजिनः वेगवतः शीघ्रानेकगतिशालिनः यन्मनो हृत्प्रतिष्ठं हृदये प्रतिष्ठं आसीनमुपलभ्यमानमिति यावत् तत्रैव ज्ञानोत्पत्तेः । यच्च मनोऽजरं नित्यं प्रौढं जविष्ठं अतिशयजवशालि वेगवदित्यर्थः । तन्मे मनः शिवसङ्कल्पमस्तु ॥ ८ ॥ इति शिवसङ्कल्पव्याख्या सम्पूर्णा ॥

अथ स्वस्त्ययनोच्चारणम्

**स्वस्ति न इति** ॥ इन्द्रः नोऽस्मभ्यं स्वस्ति अविनाशं शुभं दधातु ददातु कीदृशः वृद्धश्रवाः वृद्धं महत् श्रवः कीर्त्तिर्यस्य सः । पूषा नः स्वस्ति दधातु कीदृशः विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः ताक्ष्यों रथो गरुडो वा नः स्वस्ति दधातु कीदृशः

## [ अ. ३६. कं. ३६. ]

## पयः पृथिव्या पय ओषधीषु पयो दिव्यन्तरिक्षे पयो-धाः पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥

## [ अ. ५. कं. २१ ]

## विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि॥ विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ ३ ॥

अरिष्टनेमिः अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः बृह-स्पतिः देवगुरुर्नोऽस्मभ्यं स्वस्ति ददातु ॥ १ ॥

पय इति ॥ हे अग्ने त्वं पृथिव्यां पयो रसं धाः धेहि स्थापय दधाते-र्लुङि मध्यमपुरुषैकवचने रूपम् बहुलं छंदस्यमाङ्योगेऽपि ( ६-४-७५ ) इत्यडभावः । ओषधीषु च पयो धाः । दिवि स्वर्गे च पयो धाः । अन्त-रिक्षे च पयो धाः । किञ्च मह्यं मदर्थे प्रदिशः दिशो विदिशश्च पयस्वतीः पयस्वत्यो रसयुताः सन्तु ॥ २ ॥

विष्णो इति ॥ हे दर्भमय मालाधारवंश त्वं विष्णोः विष्णु-त्वेनोपचरितस्य हविर्धानमण्डपस्य रराटमसि ललाटस्थानीयोऽसि हे रराट्यन्तौ युवां विष्णोः विष्णुनामकस्य हविर्धानमंडपस्य श्नप्त्रे स्थः ओष्ठसन्धिरूपे भवथः । हे लस्यूजनि ( बृहत्सूचि ) त्वं विष्णोर्हविर्धानस्य स्यूरसि । सीव्यन्तेऽनेनेति स्यूः सूचिः । षिवु तन्तुसन्ताने क्विपि च्छ्वोरि-त्यूठ् । हे रज्जुग्रन्थे त्वं विष्णोः हविर्धानस्य ध्रुवोऽसि ग्रन्थिर्भवसि । हे हविर्धान त्वं वैष्णवमसि विष्णुदेवताकत्वेन तत्सम्बन्धि भवसि । तस्माद्विष्णवे विष्णुप्रीत्यर्थं त्वा त्वां स्तौम्यथवा स्पृशामीति शेषः ॥ ३ ॥

[ अ. १४. कं. २०. ]

अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता आदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥

( अ. ३६. कं. १७. )

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ५ ॥

अग्निरिति ॥ या त्वं अग्न्यादिदेवतारूपासि तां त्वामुपस्तौमीति स्मरामीति वेति सर्वत्र योज्यम् । अग्न्यादीनां देवता त्वं प्रसिद्धम् ॥ ४ ॥

द्यौरिति ॥ द्युलोकरूपा या शान्तिः अंतरिक्षरूपा च या शान्तिः पृथिवी भूलोकरूपा या शान्तिः आपोजलरूपा या शान्तिः ओषधयः ओषधिरूपा या शान्तिः वनस्पतयः वृक्षरूपा या शान्तिः विश्वेदेवाः सर्वदेवरूपा या शान्तिः ब्रह्मत्रयीलक्षणं परं वा तद्रूपा या शान्तिः सर्वं सर्वजगद्रूपा या शान्तिः शान्तिरेव शान्तिः या स्वरूपतः शान्तिः सा शान्तिः मा मां प्रति एधि अस्तु पुरुषव्यत्ययाः । महावीरप्रसादात्सर्वं शान्तिरूपं मां प्रत्यस्त्वित्यर्थः । यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः सप्तम्यर्थे प्रथमा दिव्यन्तरिक्षे पृथिव्यामप्स्वौषधीषु वनस्पतिषु विश्वेदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः ॥ ५ ॥

[ अ. ३०. कं. ३. ]

विश्वानि देवसवितर्दुरितानि परासुव ॥ यद्भद्रं तन्न आसुव ॥ ६ ॥

[ अ. १६. कं. ४८ ]

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः॥ यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ ७ ॥

[ अ. २. कं. १२ ]

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ॥ तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ ८ ॥

विश्वानीति ॥ हे देवसवितः विश्वानि सर्वाणि दुरितानि पापानि परासुव दूरे गमय यद्भद्रं कल्याणं तन्नोऽस्मान् प्रदि आसुव आगमय ।

इमा इति ॥ वयमिमा अस्मदीया मतीः बुद्धीः रुद्राय शङ्कराय प्रभरामहे प्रहरामहे समर्पयामो रुद्रं स्मराम इत्यर्थः ॥ ( हृग्रहोर्भश्छन्दसीति भादेशः ) कीदृशाय तवसे महते बलवते वा उभयत्र तवःशब्दः पठितः [ निघं० २. ८. ३. ३. ] कपर्दिने जटिलाय क्षयद्वीराय क्षयन्तो निवसन्तो वीराः शूरा यत्र स क्षयद्वीरस्तस्मै शूरयुक्तायेत्यर्थः ॥ क्षयन्तो नश्यन्तो वीरा रिपवो यस्मादिति वा । द्विपदे पुत्रादये चतुष्पदे गवादिपशवे सप्तमी वा द्विपदचतुष्पादविषय यथा येन प्रकारेण शं सुखमसत् भवति अस्मिन् ग्रामेऽस्मिन् वा संस्थाने विश्वं सर्वं प्राणिजातं पुष्टं समृद्धमनातुरं निरुपद्रवं स्वस्थं च यथा असत् स्यात् तथा मतिं हरे समर्पयाम इत्यर्थः ॥ ७ ॥

एतमिति ॥ हे देव दांतादिगुणयुक्त हे सवितः प्रसवितः । एतं यज्ञमिदानीं क्रियमाणमिमं मखं ते तुभ्यं त्वदर्थं प्राहुर्यजमानाः कथयन्ति

[ अ. २. कं. १३. ]

**मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु विश्वे देवास इह मादयंतामों प्रतिष्ठ ॥ एष वै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥ ९ ॥**

अनुज्ञापयन्तीत्यर्थः । किञ्च त्वया प्रेरितो देवानां यज्ञे यो ब्रह्मा तस्मै ब्रह्मणे बृहस्पतये च प्राहुः । बृहस्पतिर्वै देवानां ब्रह्मा । तदधिष्ठित एवायं मानुषो ब्रह्मत्वं करोति । किञ्च तेन हेतुना त्वदीयत्वेन यज्ञमव रक्ष । तथा तेनैव हेतुना यज्ञपतिं यजमानं चाव रक्ष । तथा तेनैव हेतुना मां ब्रह्माणमव पालय ॥ ८ ॥

**मन इति ॥** किञ्च मन आज्यस्य जुषतां कर्म्मणि षष्ठी । मनः घृतं सेवताम् । हे सवितस्त्वदीयं चित्तं यज्ञसम्बन्धिन्याज्ये स्थापयेत्यर्थः । किम्भूतं मनः जूतिः जवतेर्गतिकर्म्मणो जूतिरिति क्तिन्प्रत्ययान्तो निपातः स्त्रीत्वं छान्दसम । अतीतानागतवर्त्तमानकालगतपदार्थेषु गमनशीलं हि मनः जवते शीघ्रं गच्छतीति जूतिः । किञ्च बृहस्पतिरितं यज्ञं तनोतु विस्तारयतु ब्रह्मत्वात् । तत इमं यज्ञमरिष्टं हिंसारहितं कृत्वा संदधातु [ इडाभक्षणेन हि मध्ये यज्ञो विच्छिन्न इत्येवमुच्यते ] किञ्च विश्वेदेवासः सर्वे देवा इह यज्ञकर्म्मणि मादयन्ताम् । मद तृप्तौ चुरादिः । तृप्यन्ताम् । एवं प्रार्थितः सविता देवः ओम्प्रतिष्ठेत्यनुज्ञां प्रयच्छतु । ओमित्यङ्गीकारार्थः तथास्तु प्रतिष्ठ प्रयाणं कुरु यजमानस्याभिप्रेतं प्रयाणं कर्मार्थमुद्यममवगम्य सविता देवोऽङ्गीकृत्य तत्र प्रेरयतीत्यर्थः ॥ **एष इति ॥** वै निश्चयेन नाम प्रसिद्धौ एष यज्ञः पूजनं प्रतिष्ठा सत्कियारूपं स्तुत्य भवतीति भावः । यत्र यस्मिन्कर्माणि एतेन उक्तप्रकारकस-

**सुप्रतिष्ठिता वरदा भवन्तु देवाः ॥ १० ॥ इति स्वस्त्ययनं सम्पूर्णम् ॥**

**अथ विवाहः । तत्र कन्याहस्तेन षोडशहस्तपरिमितं मंडपं विधाय तद्दक्षिणस्यां दिशि पश्चिमां दिशमा-**

त्क्रियारूपपूजनेन यजन्ते यजमानाः पूजयन्ति सर्वमेव निश्चयेनाखिल तत्कर्म प्रतिष्ठितं लब्धास्पदं निर्विघ्नतया परिपूर्णमिति यावत्. भवति सम्पद्यते इत्यर्थः ॥ ९ ॥

सुप्रतिष्ठिता इति ॥ देवा द्योतनादिशीलाः सुप्रतिष्ठिताः सुसत्कृता वरदाः स्वाभीष्टफलदातारो भवन्तु स्युरिति ॥ १० ॥ इति स्वस्त्ययन· व्याख्या समाप्ता ॥

अथ विवाहः ॥ अथ स्वस्त्ययनकरणानन्तरं विवाहविधिर्लिख्यते इत्यर्थः । तत्र कन्याहस्तेनेति तच्छब्दस्य तु पूर्वपरामर्षकत्वेऽपि बुद्धिस्थपरामर्शकत्वेन तत्र विवाहगृहे अङ्गनभूमौ कन्याहस्तेन षोडशहस्तपरिमितं मंडपं विधाय कल्पयित्वा तद्दक्षिणस्यां दिशि मंडपाद्दक्षिणे पश्चिमां दिशमाश्रित्य नैर्ऋतीमभिव्याप्येत्यर्थः । मंडपसंलग्नं मंडपसमीपवर्तीत्यर्थः ॥ उत्तराभिमुखं उत्तरास्यतो गमागमद्वारं यस्य तत् ईदृशं कौतुकागारं कुलरीतिकरणार्थं कुलवधूकुलरूढाकुमारिकासहितं कन्यास्थितये स्थानं च विधाय मंडपाच्च बहिरैशान्यां मंडपाद्बहिर्मध्येऽत्रापि मंडपसंलग्नमेव बोध्यम् । ऐशान्यामीशानमभिव्याप्येत्यर्थः । जामातृचतुर्हस्तपरिमितां वरचतुर्हस्तपरिमितां वरकरचतुष्टयमात्रायामविस्तारवर्तीं सिकतादिपरिष्कृतां सिकतादिविकीर्णां तुषकेशशर्करादिरहितां वर्जितां शून्यवेणुनिर्मितां सावकाशत्वक्सारविहितां वेदीं अग्नेर्वितानार्थं स्थंभचतुष्टयरूपां वेदिकां कारयेदिति तत्र मंडपादिविधाने प्रमाणान्याह । तथा च

श्रित्य मंडपसंलग्नमुत्तराभिमुखं कौतुकागारं च मंडपा-
द् बहिरैशान्यां जामातृचतुर्हस्तपरिमितां सिकतादि-

ब्रह्मपुराणे वृन्दाविवाहप्रस्तावे ब्रह्मवचनम् । तत्र प्रथमं स्तम्भनिखनने प्रमाणमाह । सूर्य्येङ्गनासिंहघटेषु शैवे स्तंभोलिकोदण्डमृगेषु वायौ ॥ मीनाजकुम्भे निर्ऋतौ विवाहे स्थाप्योग्निकोणे वृषयुग्मकर्के ॥ इति मुहूर्त्तचिन्तामणौ रामेण प्रोक्तम् । अथ ब्रह्मपुराणवाक्यम्. विवाहोत्सवयज्ञेषु मंडपं कल्पयेत्सुधीः । सर्वविघ्नविनाशाय सर्वेषां चित्ततुष्टये ॥ १ ॥ चतुःस्तम्भसमायुक्तं चतुर्द्वारं सुशोभनम् । अनेकवर्षिकायुक्तं तोरणैः समलङ्कृतम् । विहङ्गैः कृत्रिमैर्जुष्टं कूजद्भिर्वातयोगतः । मनो हरद्भिः सर्वेषां प्रेक्षकाणां समन्ततः । शिल्पकर्मातिनिपुणं विश्वकर्म्मविनिर्म्मितम् । चित्रितं चित्रकारैश्च रञ्जितं रागकारिभिः । मण्डितं मणिभिः पुष्पैर्दन्तैर्वस्त्रैरलङ्कृतम् । सवितानं विधातव्यं तत्प्रकृष्टेन वाससा । दक्षिणस्यां पराभागे कल्पयेन्मंडपान्तिके । विवाहे कौतुकागारं नारीशालां तथाध्वरे । मंडपाद्बहिरैशान्यां वेदीश्चैवाग्निहेतवे । तथा च पराशरः । यज्ञोत्सवविवाहेषु विधायादौ च मंडपम् । धर्म्मदिक्पश्चिमे भागे कौतुकागारमुत्तमम् । लेपितं शुद्धमृदया शुद्धये च सुशोभनाम् । अतिष्ठितं सुकुम्भेन निश्छिद्रेण दृढेन च । चतुराननदीपेनाधिष्ठितेन सुशोभिना । घृतेन तिलतैलेन ज्वलता वा दिवानिशम् । विधातृप्रतिमां तत्र कन्या प्रयतमानसा । ब्रह्मचर्यव्रतवती स्नाता चैकाग्रमानसा । एकवस्त्रा च स्वमनः संयम्यालीसमन्विता । ध्यायेच्चतुर्मुखीमष्टभुजां च कमलासने । तिष्ठन्तीं कर्म्मफलदां समर्थां योगसेविताम् । रूपयौवनसौभाग्यलब्धये यशसे तथा । गृहाधिपत्यसिद्ध्यर्थं वश्याय गृहपुष्टये । सर्वविघ्नविनाशाय विवाहे मङ्गलाय च । पितुश्च श्वशुरस्यापि यशसे चार्थसिद्धये । विवाहकौतुकं हस्ते बिभ्रती कन्यकावृता । कौतुकागारमध्यासेदित्याद्याथर्वणी श्रुतिः । इति तथा चापस्तम्बः । विधाय

**परिष्कृता तुषकेशशर्करादिरहितां शुन्यवेणुनिर्मितां वेदीं च कारयेत् ॥**

मंडपं पूर्वं विवाहे चाध्वरे तथा । तदैशान्यां बहिस्तस्माद्वेदीं कुम्भञ्च मंडपे । गणेशं स्थापयेन्मध्ये कृत्वा तिलकमण्डलम् । वेद्याञ्च स्थापयेद्वह्निं साक्षित्वायार्चनाय च । तथा च कश्यपपराशरौ । मंडपाद्बहिरैशान्यां सदा कुर्य्याच्च वेदिकाम् । अग्न्यर्थञ्च विवाहादौ कृतादित्रियुगेषु वै । कलौ सङ्कोचतः कुर्य्याद्बहिर्वेदीं च मण्डलात् । अन्येषु युगेषु त्रिषु कृतादिषु मंडपाद्बहिरित्यनुसारेण मण्डपाद्बहिरेव वेदीकरणं कलियुगे तु मण्डलाद्बहिर्न मंडपाद्बहिरिति पकारस्थाने लकारोच्चारणं सर्वत्र वाक्येष्विति कलियुगेऽन्ययुगेषु च व्यवस्था महद्भिः स्थापिता सैव मन्तव्येत्यर्थः । मरीचिरपि कृते भोगे मनोमोद उदारत्वं गमिष्याति कलौ जनस्तु सङ्कोचं धर्म्मकार्य्ये विशेषतः । देशधर्म्मादिसङ्कोचाद्वेदी स्यान्मण्डलाद्बहिरिति मण्डलात्तिलकनाममण्डलात् । विवाहादौ लिखेन्नित्यं तिलकं नाममण्डलमिति कात्यायनाभिधानात् । मंडपे तिलकंनाम मण्डलञ्च विधीयते तस्माद्बहिर्वेदीं विदध्यान् इत्याशयः । सर्वतोभद्रतिलकयोर्लक्षणं कात्यायनेनोक्तम् । सूर्य्यादयो ग्रहा यत्र राजन्ते मध्यसंस्थिः । इन्द्रादयः प्रतिदिशं स्वस्वभागेष्ववस्थिताः ॥ १ ॥ बहिः शिवसुताद्याश्च सर्वतोभद्रमुच्यते । विघ्नराजो भवेद्यत्र मध्ये नान्यस्तु कश्चन ॥ २ ॥ सुमहत्सुन्दरं चैव तिलकं नाम मण्डलम् । उच्यत इति शेषः । गृहारामप्रतिष्ठायां दुर्गाहोमे नवग्रहे । सर्वतोभद्रकं कुर्य्यान्मण्डपे तिलकं लिखेत् । इति ब्रह्मपुराणे वेदीपरिमाण निरूपितम् । यवोदैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः ॥ स्यान्मण्डपं षोडशहस्तमात्रं तत्तूर्य्यभागेन च वेदिका स्यात् । तथा च मरीचिः । वेदी बहिः स्याद्यदि मंडपाच्च तत्तूर्य्यभागेन च वेदिका सा ॥ वेदी यदा मण्डलतो बहिः स्यात्सा वेदिका

## विवाहदिने कृतनित्यक्रियेण यजमानेन

हस्तमिताप्रादिष्टा । वेदीस्वरूपं मनुराह सर्वत्र वेदी चतुरङ्गुले च्छ्रुता विनिर्मिता सैकतमृत्तिकादिभिः ॥ द्विधा तु सा केवलवेदिकात्मिका परा युता स्तम्भचतुष्टयेन या ॥ इति स्तम्भचतुष्टयेत्युपलक्षणं तेनोपरितनकाष्ठक-चतुष्टयेनापि युता इति भावः । विवाहस्योभयपक्षे तुल्ययोगक्षेमत्वात् वरपक्षेऽपि विवाहदिने कर्त्तव्यतां निरूपयति ॥

**विवाहदिन इति ॥** विवाहादिने सर्वकार्य्याणि गौणत्वेन विधाय मुख्यत्वेन स्नात्वा तावत्कृतनित्यक्रियेण यजमानेन पूजकत्वेन प्रसिद्धेन जामातृपित्रा वरजनकेनेत्यर्थः । जामातृपित्रेति विवाहकाले सर्वेषां वरप-क्षीयस्वपक्षीयाणां पूजकत्वेन कन्यापितुर्मुख्यत्वात् जामातृपित्रेति कन्यापि-तुर्मुख्यत्वसूचनायैवेत्यलं तेन मातृपूजापूर्वकं सर्वासां मातृणां पूजनं विधाय आभ्युदयिकं नांदीमुखं नाम श्राद्धं कर्त्तव्यम् । आभ्युदयिककालनिरूपकप्र-माणानि श्राद्धविवेके आभ्युदयिकश्राद्धप्रस्तावे । कन्यापुत्रविवाहेषु प्रवेशे नववेश्मानि । चूडाकर्मणि बालानां नामकर्म्मादिके तथा । सीमन्तो-न्नयने चैव पुत्रादिमुखदर्शने इत्यादि । अथाभ्युदयिकविधौ कात्यायनः । नात्रापसव्यकरणं पितृतीर्थञ्च नेष्यते । पात्राणां पूरणादीनि दैवेनैवाभि-कारयेत् । शातातपः । सर्ववृद्धौ हि पितरः पूजनीयाः प्रयत्नतः । सव्येन चोपवीतेन ऋजुदर्भेण धीमता । पितृणां रूपमास्थाय देवाश्चान्नं सम-श्नुते । तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु नित्यशः । मातृश्राद्धं तु पूर्वं स्यात् पितृश्राद्धं ततः परम् । ततो मातामहश्राद्धं वृद्धौ श्राद्धत्रयं स्मृ-तम् । त्रिष्वेवैतेषु युग्मांश्च ब्राह्मणान् भोजयेच्छुचिः । प्रदक्षिणञ्च सव्येन प्रदद्याद्दैवपूर्वकम् ॥ विष्णुपुराणे ॥ देवतीर्थेन वै पिण्डान् दद्यात्कायेन वा पुनः । द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् । शङ्खः । दधिबदरा-क्षयाक्षतैर्मिश्राः पिण्डा मधुविवर्ज्जिताः । स्वधाशब्देन रहिता दातव्याः

**जामातृपित्रा मातृपूजापूर्वकमाभ्युदयिकं कर्त्तव्यम्। कन्यापिता शुचिः स्नात्वा शुक्लाम्बरधरः कृतनित्यक्रियो मातृपूजाभ्युदयिके कुर्यात् ॥ अथार्हणवेलायां मंडपे उदङ्मुखः प्राङ्मुखं वरमूर्द्धजानुं संबोधयेत् ॥**

पितृतृप्तये । प्रजां पुष्टिं धनं धान्यं यशः स्वर्गमरोगिताम् । नृणां श्राद्धैः सदा प्रीताः प्रयच्छन्ति पितामहाः । इत्याभ्युदयिकं फलम् । गणेशपूजनं मातृकापूजनं वसोर्धारा च तदङ्गत्वेन पूर्वमेव विधेयानि अथ कन्यापक्षेऽपि विवाहदिने कर्त्तव्यतां निरूपयति । कन्यापितेति । कन्यापिता गौणानि चान्यानि कर्माणीति ज्ञात्वा मुख्यत्वेन शौचहीनं क्रिया यथा इति कथनात् प्रथमं शुचिः शौचादिकं विधाय स्नात्वा धर्म्माधिकारी स्यादिति विधिबलात्स्नातः कृतस्नानः शुक्लांबरधरः श्वेतधौतोत्तरीयादिवस्त्रधृक् कृतनित्यक्रियः कृता नित्यक्रियाः सन्ध्यादिकर्माणि येन सः तदनन्तरं मातृपूजाऽऽभ्युदयिके कुर्य्यात् । मातृपूजेत्युपलक्षणम् आभ्युदयिकाङ्गानि वरदराजं मातृकाः श्रियं देवीं प्रतिष्ठाप्य सम्पूज्य वसुधारां दत्वा आभ्युदयिकं कुर्य्यादिति भावः ॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥१॥ हृष्टिः पुष्टिस्तथा तुष्टिस्तथात्मकुलदेवता । इति मातॄः प्रणवादिचतुर्थ्यन्तनामभिरावाह्य । मनो जूतिर्जुषतामिति ऋचाक्षतैः युगपद्गणेशश्रीसहिताः प्रतिष्ठाप्य कौसुंभसूत्रावृतदूर्वाङ्कुरमयीं रक्षिकां विधाय तदुपरि एकैकां स्थापयित्वा पाद्यार्घ्यादिभिराभ्युदयिकश्राद्धं कुर्य्यात् तत्पद्धतिश्च श्राद्धविवेक इति । अथार्हणवेलायामिति अथशब्दो मङ्गलार्थे । अर्हणवेलायां वरार्चनकाले अर्हणवेलां हृदि समाधाय तस्याः पूर्वमेव वरार्हणवेला यथा न नश्येदिति हृदि कृत्वा ततः पुरस्तादेव पञ्चसप्तघटिकाऽवसरमभिव्याप्य वरमानाय्य तावद्वरस्य पूजाया अङ्गत्वेन समीचीनत्वेन च मंडपे प्रथमं सर्वविघ्नहरत्वेन सर्वकार्य्यसाधक-

## ॐ साधु भवानास्तामर्च्चयिष्यामो भवन्तमिति

त्वेन च श्रीगणेशं कुम्भञ्च सम्पूज्येति शेषः तदनु उदङ्मुखो यजमानः कन्यादाता प्राङ्मुखं वरमूर्ध्वजानुं आगमनकर्तृत्वेनोर्ध्वमेव तिष्ठन्तं सम्बोधयेदिति भार्या । त्रिवर्गकरणं शुभशीलयुक्ता शीलं शुभं भवति लग्नवशेन तस्याः । तस्माद्विवाहसमयः परिचिन्त्यते हि तन्निघ्नतामुपगताः शुभशीलधर्म्माः ॥ इति रामोक्तलग्नवेलां हृदि समाधाय विचार्य्य पूजार्थं वरस्याभिमुखत्वाय सावधानत्वाय सम्बोधनम् । तदेवाह ।

**साधु भवानिति ।** भवान् पूज्यत्वेन प्रसिद्धः साधु सुखं यथा भवति तथा तावदास्तां तिष्ठतु भवन्तमर्च्चनीयं यावदर्च्चयिष्यामः बहुवचनं सकुटुम्बाभिप्रायेणैवेति । यथोक्तम् भाष्ये । आहरन्ति विष्टरं पाद्यमर्घमाचमनीयम् मधुपर्क इति यजमानपुरुषा इति शेषः ॥ यत्र वा अर्हन्नागच्छति सर्वगृह्या वै तत्र चेष्टयन्ते इति श्रुतिः अर्च्चयिष्याम इति प्रतिज्ञायते । तेन वरयोग्यमेवैतदित्यभिप्रायं मनसि निधाय । अस्यार्च्चनीयत्वे प्रमाणमाह भाष्ये । षडर्घ्या भवन्ति आचार्य्यऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति । आचार्य्य उपनयनपूर्वकं वेदवेदाङ्गस्याध्यापको गुरुरित्यर्थः ॥ ऋत्विक् श्रौतस्मार्त्तादिकर्म्मार्थं वृतो ब्राह्मादिः वैवाह्यो वरः प्रियो मित्रं उत्कृष्टजातिः समानजातीयो वा न त्वपकृष्टजातीयः प्रियोऽर्घ्य इति भावः ॥ स्नातको वेदमधीत्य समावृतः सन् स्नातः । तस्याचार्य्योऽर्घदानं तावत्करोति न्यायः इति ॥ अन्यत्प्रमाणमाह प्रतिसंवत्सरमर्हयेयुर्यक्ष्यमाणाः ऋत्विज इति अस्यार्थः प्रतिसंवत्सरानन्तरमागतानाचार्य्यादीनर्घादिना सदार्चयेदिति विधिः प्रतिसंवत्सरमाचार्य्यादयोऽर्च्चनीयाः पुनः यक्ष्यमाणायागं करिष्यन्तो यजमानास्तु ऋत्विजः सम्वत्सरादर्वागपि अर्च्चयेयुरिति ।

अर्च्चयेति वरेण प्रत्युक्ते प्रतिज्ञासङ्कल्पं कुर्य्यात् । ॐ अद्य तत्सदित्यादिकालज्ञानं कृत्वाऽमुकगोत्रोऽमुकशर्म्मा श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुकगोत्राया अमुकप्रवराया अमुकनाम्न्याः कन्याया विवाहोत्सवनैमित्तिकवरपूजनमहं करिष्ये । ततो दाता ॐ शन्नो देवीति जलं मन्त्रयेत् । लाजाश्चेति लाजा मंत्रयित्वा तज्जलेन पादप्रक्षालनम् । तत्रादौ दक्षिणपादप्रक्षालनम् । तत्र मन्त्रः । दक्षिणपादमवनेनिज इदमहमस्मिन्कुले ब्रह्मवर्च्चसं ददामि । उत्तरपादमवनेनिज इदमहमपि तेजोवीर्य्यमन्त्राभ्यां प्रजाः पशून् ब्रह्मवर्च्चसं ददामि । इति तावत् पादौ प्रक्षाल्य पश्चाद्विष्टरपाद्यादिदानं । वरोपवेशनार्थं शुद्धमासनं दत्वा विष्टरमादाय विष्टरो विष्टर इत्यादिकस्य

अर्च्चयेतीति । इति तस्य पूज्यत्वं संसाध्य वरेणार्च्चयेति प्रत्युक्ते वरपूजादिप्रकारमाह । वरोपवेशनार्थमिति । वरोपवेशनार्थं शुद्धमासनं दत्वा विष्टरदानं । तत्राह मनुः । पूजको यजमानस्तु दत्वादौ शुद्धमासनम् । तस्योपवेशनार्थं तु विष्टरं प्रददेत्पुनः ॥ १ ॥ यथान्यायं यथोद्दिष्टं वराय विधिपूर्वकम् इति । शुद्धासनलक्षणं प्राह मरीचिः । शणसूत्रादिनोतं च निर्मितं शोधितैः शरैः । मुख्यं स्थूलतमं रम्यं प्राहुः शुद्धं सुखासनम् ॥ १ ॥ तथा च पराशरः । सिंहासनं सुवर्णादिधातुना निर्मितं शुभम् । दारुभिर्निर्मितं चाथ शरैर्वा शुद्धमासनम् इति । दारुभिरिति शुद्धैश्चन्दनदेवदारुप्रभृतिभिरिति भावः । विष्टरमादायेति । यजमानो विष्टरमादाय पञ्चविंशतिदर्भतृणमयं कूर्चं गृहीत्वा विधिना दद्यादिति । विष्टरलक्षणं गृह्यपरिशिष्टे । पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु

कपिल ऋषिस्त्रिष्टुप् छन्दो विष्टरो देवता विष्टरदाने विनियोगः ।
ॐ विष्टरो विष्टरो विष्टरः इत्यन्येनोक्ते विष्टरः प्रतिगृह्य-तामिति दाता वदेत् । विष्टरं प्रतिगृह्णामीत्यभिधाय वरो विष्टरमुदगग्रमुभयपाणिभ्यामादाय ।

विष्टरः । ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥ दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥ १ ॥ यद्वा । पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितम् । विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्तितमिति ॥ १ ॥ विष्टरस्त्रिवृता दर्भकूर्च्चक इति वा ॥ इति विष्टरलक्षणम् । अथ विष्टरदाने यथा विधिस्तत्र प्रमाणमाह सुमन्तुः । विष्टरप्रभृतीनन्यस्त्रिस्त्रिवारं वदेत्करे । दातुर्निरीक्ष्य दाता तु विष्टरः प्रतिगृह्यताम् ॥ विष्टरं प्रतिगृह्णामीत्यभिधायाददेद्वरः । तमुत्तराग्रमादाय मन्त्रेणोपविशेत्स्वयम् । विष्टरप्रभृतीन् पाद्यार्घाचमनीयमधुपर्कानिति । तथा च गृह्यपरिशिष्टे । अन्यस्त्रिस्त्रिः प्राह विष्टरादीनिति । विष्टरइत्यादिकस्य कपिल इति । विनियोगं विना मन्त्रः पङ्के गौरिव सीदतीति विनियोगमुच्चार्य्य मन्त्रपाठः कर्त्तव्यः । विनियोगमाह । ऋषिच्छन्दोदेवतानां कर्म्मणे विनियोजनम् । विनियोगः स आदिष्टो मन्त्रे मन्त्रे प्रयुज्यते ॥ इति । अन्यस्त्रिस्त्रिर्विष्टरादीन्प्राहेति गृह्यपरिशिष्टे निरूपणात् विष्टरो विष्टरो विष्टर इति त्रिवारं अन्येन अर्च्चकादपरेण वा दातृप्रतिगृहीत्रोर्भिन्नेन पुरोधसा उपाध्यायेन वा उक्ते सति । वारत्रयकथनं तु श्रवणादित्रयवत् शास्त्रोक्तविष्टरलक्षणयाथात्म्यसाक्षात्कारायैवेति विष्टरत्वे सिद्धे विष्टरः प्रतिगृह्यतामिति दाता वदेत् इत्यर्थः । वस्तुयाथात्म्ये विज्ञाते वस्तुदानामिति न्यायात् । प्रशस्तादुत्तमं दानं प्रतिगृह्णाति सत्तमः । प्रतिग्राह्युन्मुखीभूय विपर्य्ययमतोऽन्यथा ॥ इति हारीतवचनात् दातुः प्रशस्तत्वसिद्धये दानस्य चोत्तमत्वप्राप्त्यै उन्मुखीभूय वरो विष्टरं प्रतिगृह्णामीत्यभिधाय विष्टरं प्रतिगृह्णाति । वि-

ॐवर्ष्मोऽस्मीत्यस्याथर्वणवाग्दाल्भ्य ऋषिरनुष्टुप् छन्दो विष्टरो देवता विष्टरोपवेशने विनियोगः । **ॐवर्ष्मोऽस्मि समानानामुद्यतामिव सूर्य्य इमं तमभितिष्ठामि यो मां कश्चाभिदासतीत्यनेनैनमुदगग्रमासनोपरि निधायाभ्युपविशति ।**

ष्टरमुदगग्रमुभयपाणिभ्यां गृहीत्वा ततो वरः किङ्कुर्य्यादित्यपेक्षायामाह । विष्टरमुदङ्मुखेन यजमानेन तिष्ठता दत्तं पूर्वं गृहीत्वा शुद्धादासनात्पश्चिमभागे प्राङ्मुखस्तिष्ठन्नर्घ्यः पूर्वोक्तलक्षणं विष्टरं पाणिभ्यामुदगग्रमादाय वर्ष्मोऽस्मीति मन्त्रपाठान्मन्त्रितमेनमुदगग्रमासने निधायाभ्युपविशेत् । एनमभ्युपविशतीति पाठे एनं विष्टरं विवृतीकृत्वोपाविशतीत्यर्थः । **वर्ष्मोऽस्मि समानानामिति** । आत्मानमर्च्यत्वायार्घ्यः स्तौति कुलज्ञानाचारवपुर्वयोग्रहैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः ज्येष्ठो वा आच्छादको वा । आच्छादके तथा ज्येष्ठे श्रेष्ठे वर्ष्म इतीरितः । इति हलायुधेऽनेकार्थेषु । अस्मि भवामि केषां क इव उद्यतामुदयं गत्वा प्रकाशं कुर्वतां ग्रहनक्षत्रतारकादीनां मध्ये सूर्य इव स्थितः किञ्च इमं विष्टरं तं पुरुषमुद्दिश्य विष्टरबद्धमभिलक्षीकृत्याभिभूय वा तिष्ठामि अधःकृत्वोपर्य्युपविशामि । तं कं यः कश्चन मां अभिदासति हिनस्ति उपक्षीणं कर्तुमिच्छति इति वा दास सेवायां अभिपूर्वो दास हिंसार्थे इति कर्केण व्याख्यातम् । दसु उपक्षये इत्यस्य धातोर्वा रूपम् । इत्युपवेशनविधिः । आसीनायासने तस्मिन्पादयोर्विष्टरं तथा । दद्यादन्यं ततो दाता पादौ प्रक्षाल्य यत्नतः ॥१॥ इति भृगूक्त्या पादौ प्रक्षाल्य विष्टरदानम् । विष्टर इति मन्त्रेण विदधाति इति भविष्योक्त्याऽपि प्रथमं पाद्यदानमिति पाद्यं पद्भ्यामाक्रमणीयमिति लक्षणेन द्वितीयं विष्टरमपि पाद्यं भवति । किञ्च पाद्यं पादार्थमुदकं पाद्य-

ॐपाद्यं पाद्यं पाद्यमित्यन्येनोक्ते पाद्यं प्रतिगृह्यतामिति दाता वदेत्। पाद्यं प्रतिगृह्णामीत्यभिधाय वरः यजमानाञ्जलितोञ्जलिना पाद्यमादाय वरः ॥ विराजो दोहोऽसीतिमन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवता पादप्रक्षालने विनियोगः । ॐविराजो दोहोसि विराजो दोहमशीयमयि पाद्यायै विराजो दोहेति दक्षिणचरणं प्रक्षाल्यानेनैव क्रमेण वामचरणप्रक्षालनम् । ततः पूर्ववद्विष्टरान्तरं गृहीत्वा पूर्वोक्तेनानेनैव प्रकारेण पूर्वोक्तमन्त्रेणैव चरणयोरधस्तादुत्तराग्रं वरः कुर्यात् ।

मित्येव पूज्यपूजाऽवसरे व्यासादिभिर्निरूपणात् विष्टराद्यतिरिक्तमेव पाद्यनिर्धारणम् । पादप्रक्षालनार्थं ताम्रादिपात्रस्थमुदकं सुखोष्णं तथा च आचारचन्द्रोदये । दत्वोपवेशनायादावासनं विष्टरं तथा । पादप्रक्षालनायाम्भः स्थितं ताम्रादिभाजने ॥ १ ॥ पाद्यद्वयं विष्टरवद् दद्याद्दक्षिणसव्यतः । पाद्यान्ते विष्टरं देयं पूर्वेण विधिना पुनः ॥ २ ॥ इति । ताम्रं पैत्तलकं लौहमौपलञ्च द्विजादितः । पात्रं पाद्यजलायोक्तं ताम्रं वा सर्ववर्णकम् ॥ ३ ॥ इति पाद्यपात्रमुक्तं सुमन्तुना ॥ पाद्यार्थमुदकं कोष्णं ताम्रपात्रे च संस्थितम् । तेन प्रक्षालयेत्पादं विधिना च तथापरम् ॥ ४ ॥ इत्यापस्तम्बवचनात् । यजमानोऽञ्जलिना पाद्यमादायेत्यर्थः ॥

पाद्यं पाद्यं पाद्यमिति ॥ पाद्यस्याऽपि पूर्ववद्विधिः अतः सुगमम् । विराजो दोहोऽसीति पादयोर्जलक्षेपे मन्त्रोऽस्यार्थः । प्राणधारणादिगुणैः सकलसौहृद्येन विविधतया राजते यः स विराट् तस्य विराजः विशिष्ट-

**ततो दूर्वाक्षतपुष्पचन्दनयुतार्घपात्रमादाय यजमानः।**
ॐ अर्घ इत्यादिविष्णुर्ऋषिस्त्रिष्टुप् छन्दो विष्णुर्देवतार्घदाने विनियोगः ।
**ॐअर्घोऽर्घोऽर्घ इत्युक्तेऽन्येनार्घः प्रतिगृह्यतामिति दाता वदेत् । ॐअर्घं प्रतिगृह्णामीत्यभिधाय ।**

दीप्तेः दोहोऽसि । परिणतः रससारोऽसीत्यर्थः । यतः पुराणेष्वपि विराट्पुरुषशरीरादेव जलोत्पत्तिर्निरूपिता । आपो नारा इति प्रोक्ता आपो हि नरसूनवः ॥ इति । हे उदक अहं तं त्वां विराजो दोहं अशीय अश्नुवै प्रतिगृह्णामीत्यर्थः । अश् भोजनदीप्त्यादानेषु । इत्यस्य धातोराशिषि लिङि रूपम् । अशीयेति विकरणलोपः छान्दसः । किञ्च मयि विषये मद्विषया पाद्या पादयोः साध्वी सपर्य्या तस्यै तदर्थं हे विराजोदोह मन्त्रसंस्कृतजलं मच्चरणप्रक्षालनयोग्यं भवेदित्यर्थः । मन्त्रपठनकाल एव चरणप्रक्षालनं न तु मन्त्रान्ते । अनेनैव विधिना द्वितीयपादं प्रक्षाल्य पूर्ववद्विष्टरान्तरं दद्यात् । ब्राह्मणस्य दक्षिणं प्रथमं क्षत्रियवैश्ययोः सव्यं ( वामं ) प्रथमं । ब्राह्मणो दक्षिणं पादं पूर्वं प्रक्षालयेत्सदा । क्षत्रादि प्रथमं सव्यमिति धर्म्मानुशासनम् ॥ १ ॥ इति पद्मपुराणवचनात् । इति पाद्यविधिः सम्पूर्णः॥

अथार्घविधिः । अर्घतेऽनेनेत्यर्घ इत्याप एव मन्त्रलिङ्गात् । अर्घशब्देनोदकपात्रमेवेति कर्काचार्य्यः । गन्धपुष्पाक्षतकुशातिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकमिति गृह्यादिषु । कुशचन्दनपुष्पाणि चाक्षता उदकं तथा । पयो दधि तथा रुक्ममष्टाङ्गोऽर्घः करग्रहे ॥१॥ इति पुराणे ब्रह्मवाक्येनार्घलक्षणमुक्तम् । प्रतिवर्णं पात्रभेदोऽपि तस्यैवोक्तेः । यत उक्तम् । कांस्यपात्रं भवेद्विप्रे स्वर्णपात्रं तु भूमिपे । रौप्यपात्रं भवेद्वैश्ये लोहपात्रञ्च शूद्रके ॥ १ ॥ इति अर्घदानप्रतिग्रहादिकमपि विष्टरवदेव पूर्वं कृत्वा-

वरो यजमानहस्तादर्घं गृहीत्वा । आपः स्थ इत्यादिमन्त्रस्य सिन्धुद्वीप ऋषिरनुष्टुप् छन्दोऽर्घाक्षतादिधारणे विनियोगः । ॐआपः स्थ युष्माभिः सर्वान्कामानाप्रवानीति शिरसि किञ्चिदक्षतादिकं धृत्वा ॥

ऽर्घ्रिमविधानमाह । आपः स्थेति मन्त्रार्थः । हे आप इति शेषः । यतो यूयं आपः स्थ आपो भवथ अप्शब्द आप्लृ व्याप्ताविति धातोः आप्नोतेः क्विप् वा ह्रस्वश्चेति सर्वेषां अमृताज्यपयोदधिमधुफलपुष्पपत्रयवसान्नशुच्चिपुष्टितुष्टिहृष्टितृप्त्यादीनां हेतुत्वं या आप्नुवन्तीत्यापः हेतवः यतो यूयं आपः स्थ सर्वत्र हेतवः स्थ अस् भुवीत्यस्य लटि मध्यमपुरुषबहुवचनं तस्मात् युष्माभिः कृत्वाहं सर्वानशेषान् अभीष्टार्थान् आप्नुवानि लभेय । इति मन्त्रं पठित्वाऽर्घात्किञ्चित्पुष्पमक्षतं वा गृहीत्वाऽर्घं स्वशिरसि क्षिपेत् । यत उक्तम् । दातुरर्घ्योऽर्घमादाय तस्माच्छिरसि धारयेत् । मन्त्रान्ते सर्वकामः सन् किञ्चित्पुष्पादिकं वरः ॥१॥ इति कामधेनुकारवचनात् । ततोऽर्घ्योऽर्घं गृहीत्वोपमौलि समानीय निनयन्नभिमन्त्रयते इति भाष्यवचनात् । अस्यार्थः । प्रतिगृहीतमर्घं शिरसाऽभिवन्द्य निनयन्नामयन् भूमौ प्रवाहयन् अभिमन्त्रयतेऽर्घ्यो वरः समुद्रं वः इति मन्त्रेण न तु मन्त्रान्त इति । तथा च पराशरः । गृहीत्वार्घं वरस्तस्मात्पुष्पं दत्वा स्वमूर्द्धनि । करयुग्मेन तं भूयो मौलिपर्य्यन्तमानमेत् । शनैरानम्यैशादिशि तं मन्त्रेण समुत्सृजेत् ॥१॥ इति । मन्त्रेण समुद्रं व इति मन्त्रेणेत्यर्थः । समुद्रं व इति मन्त्रार्थः ॥ हे आपः साधितार्थान् वो युष्मान् अहं समुद्रं प्रहिणोमि कारणतां नयामि अतो यूयं मत्प्रहिताः स्वां योनिं रसतां स्वकारणभूतं समुद्रं वा अभिलक्षीकृत्येत्यर्थः । गच्छत व्रजत किञ्च युष्मत्प्रसादादस्माकं वीराः भ्रातरः पुत्राश्चारिष्टाः सन्तु रिष्टा हिंसा तदर्थं कर्म्म वा रिष्टं न रिष्टं येषां ते

समुद्रं व इत्यादिमन्त्रस्याथर्वण ऋषिर्बृहती छन्दो वरुणो देवताऽर्घजलप्रवाहे विनियोगः । **ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत अरिष्टास्माकं वीरा मा परासेचिमत्ययः ४ इत्यर्घपात्रस्थजलमैशान्यां त्यजन् पठेत । ततआचमनीयमादाय यजमानः** आचमनीयमित्यापस्तम्बऋषिरुष्णिक्छन्दः आपो देवता आचमनीयदाने विनियोगः । **आचमनीयमाचमनीयमाचमनीयमित्यन्येनोक्ते आचमनीयं प्रतिगृह्यतामिति दाता वदेत् आचमनीयं प्रतिगृह्णामी-**

तदनुपहिताः सन्त्वित्यर्थः । किञ्च मत्पयः मत्पूजार्हं अंब्वादि मङ्गलजलं मा परासेचि अपगतं मास्तु मापगच्छत्वित्यर्थः । तदिहैव तिष्ठतु सदैवाहमर्घ्यो भवानीत्यर्थः ॥ इत्यर्घविधिः ॥

**अथाचमनविधिः** ॥ आचमनीयमाचमनार्थं कमण्डलुसम्भृतं शुद्धं जलं । आचमनलक्षणमाह । गोकर्णाकारं करं कृत्वा तत्र स्थापितस्य चुलुकमात्रस्य जलस्य पानं त्रिःकृत्वा ब्रह्मादितीर्थेनाचमनम् यत उक्तं ॥ पूताभिः प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । त्रिवारमद्भिराचामेद्द्विजादिः शुद्धिहेतवे ॥ १ ॥ इत्याचारचन्द्रोदये । अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । हृत्कण्ठतालुगाभिश्च यथासङ्ख्यं द्विजातयः ॥१॥ इत्याचारादर्शे । द्विजादिर्ब्रह्मतीर्थेन त्रिः पिबेदम्बु वीक्षितम् । इत्यपि तत्रैव । तत **आचमनीयमिति** ततोऽर्घविधेरनन्तरं यजमानः आचमनीयं पूर्वोक्तलक्षणलक्षितं शुद्धकमण्डलुसम्भृतं जलं ताम्रमयार्घपात्रे कृतं आदाय पूर्ववद्विनियोगपाठोऽन्येनाचमनीयमिति त्रिरुक्तिर्दात्राचमनीयदानं अर्घ्येणाचमनीयप्रतिग्रहणादिकं कृत्वा अर्घमाचमनीयजलं वामकरधृतताम्रमयार्घपात्रेण दक्षिणहस्ते सकृदाचमितुमुचितं धृत्वा विनियोगपूर्वकं

त्यभिधाय वरो यजमानहस्तादाचमनीयं गृहीत्वा।आमागन्निति परमेष्ठी । ऋषिर्बृहती छन्दः आपो देवता अपामुपस्पर्शने विनियोगः ॐ आमागन्यशसा सꣳसृज वर्च्चसा तम्माकुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टं तनूनाम् ॥ इत्यनेन सकृदाचामेत् द्विस्तूष्णीं आचामेत् ।

मन्त्रं पठित्वा सकृदाचामेत् । मन्त्रं पठित्वेति मन्त्र आमागन्नित्यादि ज्ञेयम् । मन्त्रार्थः । तत्र परमेष्ठी बृहतीमाह आचमने अप्सु अपामाधिपस्तिष्ठतीति श्रुत्यनुसारेण आचमनाय हस्ते धृतजलं समीक्ष्य तत्र वरुणं ध्यात्वा आशंसार्थया सामवेदर्चा वरुणां प्रार्थयते । आमागान्निति ॥ हे जलेश वरुण तं मा एवंरूपेण स्थितं पूर्वोक्तप्रकारेण स्थितं त्वामाश्रितं मा मां यशसा आमा सह आमा सहार्थेऽव्ययम् सहभावं सामीप्यं वा आगन आगमय यशस्विनं कुर्वित्यर्थः । आगन्निति प्रार्थनायां लोटः मध्यमपुरुषैकवचनम् । प्रत्ययलोपश्छान्दसः । मो नो धातोरिति मकारस्य नकारादेशः । आङ्पूर्वो गम्लृ गतौ इति धातुस्तस्य रूपम् । किञ्च ब्रह्मवर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु ब्रह्मतेजः संसर्गिणं कुर्वित्यर्थः । ब्रह्मवर्चसेत्युपलक्षणम् । क्षत्रियवैश्ययोः स्वस्वतेजसा संसृजेति भावः । किञ्च प्रजानां प्रशस्तजनानां प्रियं प्रेष्ठं कुरु । किञ्च पशूनां गवाश्वादीनामधिपतिं स्वसत्वेन स्वामिनं कुरु । किञ्च तनूनां शरीराणां अरिष्टं अहिंसकं सुखजनकं वा कुरु रिष्टं हिंसाकर्म्म । निषिद्धं कर्म्म हिंसा स्यादिति वसिष्ठः । अनभ्यासस्तु वेदानां त्यागात्सत्कर्म्मणां गवाम् । गुरुगङ्गाम्बुविप्राणां निन्दा गोहत्यया समा ॥ १ ॥ इति बृहत्पराशरस्मरणात् । न तु वाङ्मनोभी रिष्टं वा कुर्य्यामित्याशयः । यद्वा तनूनां शरीरावयवानां अरिष्टं आपद्रहितं कुर्वित्य-

**ततो यजमानः कांस्यपात्रस्थदधिमधुघृतानि समादायान्येन कांस्यपात्रेण पिधाय कराभ्यामादाय** मधुपर्कैति मधुच्छन्द ऋषिर्बृहती छन्दो मधुभुग्देवता मधुपर्कदाने विनियोगः ।

र्थः रिष्टमापत्तस्य अभावं कुरु । इति मन्त्रेण सकृदाचामेत् । तदनन्तरं द्विस्तूर्ष्णीं मन्त्रपाठं विनैवाचामेत् ॥ इत्याचमनाविधिः ॥

**॥ अथ मधुपर्कविधिः ॥** तत आचमनविधेरनन्तरं यजमानः कांस्यपात्रस्थदधिमधुघृतानि अन्येन कांस्यपात्रेण पिहितान्यादाय गृहीत्वा मधुपर्कैन्योक्ति मधुपर्कदानवाक्यं च विष्टरादिवत्कुर्यात् । प्रतिग्रहे तु विशेषः । मधुपर्कप्रतिग्रहे विशेष इति पूर्वं यदुक्तं तत्राह । मधुपर्कमसम्प्रतीक्ष्य प्रतिगृह्णाति विवेकहीनजीवो बुद्ध्वापश्चात्त्यजति तेन प्राप्नोति पापसन्दोहमिति । बृहत्पराशरः । मधुपर्कं प्रतिगृह्य पीत्वा तं यस्तु सन्त्यजेत् । तेन पापं महाघोरं तं तु नाशु प्रतिग्रहेत् ॥ न दोषो मनुरित्याह सम्प्रतीक्ष्य प्रतिग्रहे । अतः सम्प्रतीक्ष्य प्रतिगृह्णीयादिति भावः । अथ मधुपर्कलक्षणं भाष्ये प्रोक्तम् । दधिमधुघृतमथ पिहितं कांस्येनेति । तथा च स्मृतिः । संशोधितं दधि मधु कांस्यपात्रे स्थितं घृतम ॥ कांस्येनानेन संछन्नं मधुपर्कमितीर्यते ॥ शोधनमपि तत्रैव बृहत्पराशरेणोक्तम् । दधिक्राम्णेति दध्नश्च वस्त्रान्निष्कासनञ्च यत् । मधुव्वातेति तिसृभिर्मधुनः शोधनं स्मृतम् ॥ आज्यमग्नावधिश्रित्य वह्निनानुसृते घृते । घृतं घृतेति मन्त्रेण वस्त्रपूतञ्च शोधनम् ॥ एतच्छोधनमेतेषां मधुपर्कविधौ मतम् । अन्यत्र मधुपर्कात्तु वस्त्रपूतं हि केवलम् ॥ इति । मधुपर्कें दध्यादिपरिमाणं । सर्पिश्च पलमेकन्तु द्विपलं मधु कीर्तितम् । पलमेकं दधि प्रोक्तं मधुप-

ॐमधुपर्को मधुपर्को मधुपर्क इत्यन्येनोक्ते ॐ मधुपर्कः प्रतिगृह्यतामिति दाता वदेत् । मधुपर्कं प्रतिगृह्णामीत्यभिधायैव वरः ॐ मित्रस्येति प्रजापतिर्ऋषिः पंक्तिश्छन्दो मित्रो देवता मधुपर्कदर्शने विनियोगः ॥ ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे इति दातृकरस्थमेव मधुपर्कं निरीक्ष्य देवस्य त्वेति ब्रह्मा ऋषिर्गायत्री छन्दः सविता देवता मधुपर्कग्रहणे विनियोगः

केविधौ बुधैः ॥ इति मधुपर्कबृहत्परिमाणं बृहत्पराशरेणोक्तम् । सर्पिरेकगुणं प्रोक्तं शोधितं द्विगुणं मधु । मधुपर्कविधौ प्रोक्तं सर्प्पिषा च समं दधि । इति लघ्वापस्तम्बेन लघु परिमाणं दर्शितम् । एतेन पलनियमं विहाय यावत् परिमाणं माषटङ्काख्यपरिमाणमाज्यं संशोध्य कांस्यपात्रे संस्थापितं तावदेव परिमाणं दधि तद्विगुणं मध्विति यद्यपि स्यात्तथापि नैतयोर्वाक्ययोर्विरोधः । यतो बृहत्पराशरेण मर्य्यादा दर्शिता । पलपरिमाणादधिकं सर्प्पिर्न स्यात् । इत्यात्यन्तिकी मर्य्यादा तेन दर्शिता । न्यूनपरिमाणन्तु आपस्तम्बेन सर्पिरेकगुणं माषटङ्केत्युक्तम् । नाधिकमिति तात्पर्य्यम् । इति किञ्च प्रतिगृहीतं मधुपर्कमपीत्वा त्यागे महाघोरपापसम्भवः । रोमकीटादिदूषितमधुपर्कपानेऽपि महाघोरपापसम्भवः । अतो यजमानकरस्थमेव निर्दोषज्ञापनार्थं निरीक्षेत । यदि निर्दुष्टं तदा प्रतिगृह्णीत । ग्रहणाभावेऽपि प्रतिगृह्णामीत्यभिधानन्तु यजमानमानायैव केवलं । मधुपर्कत्यागजान्दोषान् दर्शयति स्मृतिसारमहार्णवप्रभृतिषु । यत उक्तम् । रोमभिस्तु भवेत्कुष्ठी मक्षिकाभिर्दरिद्रिता । कीटकैश्च भवेदन्धस्तदर्थं हि निरीक्षणम् ॥ गवां दुग्धे तु रोमाणि घृतमध्ये तु मक्षिकाः ।

**ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां प्रतिगृह्णामीत्यभिधाय वरो मधुपर्कं गृहीत्वा वामहस्ते कृत्वा** ॐ नमः श्यावास्यायेतिप्रजापतिर्ऋषिर्गायत्री छन्दः । सविता देवता मधुपर्कालोडने विनियोगः ।

मधौ च कीटकाः स्युर्वै तदर्थं हि निरीक्षणम् ॥ किञ्च मधुपर्कनिरीक्षणेऽदृष्टमपि फलम् । तदेव दर्शयति ॥ पुंभिश्च यत्कृतं पापं बाल्ययौवनवार्द्धके । तत्सर्वं नाशयेत्पापं मधुपर्कोऽवकाशने इति तत्र स्मृतिषु दर्शनात् । अवकाशने पिधानमुद्घाट्यावलोकन इत्यर्थः ॥ मधुपर्क इति मधुपर्क इति त्रिरन्येनोक्ते मधुपर्कः प्रतिगृह्यतामित्याह दाता । अर्घ्येण प्रतिगृह्णामीति केवलं वाङ्मात्रेणोच्यते एव नतु विष्टरादिवत्तत्क्षणमेव प्रतिगृह्यते ॥ अस्यायमाशयः ॥ प्रतिगृह्यतामिति दात्रोक्ते प्रतिगृह्णामीत्यभिधाय वरो यजमानहस्तगतमेवोद्घाटितं कृत्वा मित्रस्येति मन्त्रेणार्धं प्रतीक्षते ॥ मित्रस्येति ॥ हे मधुपर्क त्वा त्वां मित्रस्य सूर्य्यस्य चक्षुषा प्रतीक्षे पश्यामि । अहमादित्येन चक्षुर्दानेनानुगृहीतः त्वां पश्यामीत्यर्थः ॥ ततो रोमादिभिरदुष्टं निरीक्ष्य यजमानदत्तं मधुपर्कं देवस्य त्वेति मन्त्रेण दक्षिणहस्तेन प्रतिगृह्णाति वरः ॥

**देवस्य त्वेति** । हे मधुपर्क अहं त्वा त्वां प्रतिगृह्णामि कस्मिन सति सवितुर्देवस्य प्रसवेऽभ्यनुज्ञाने सति सवितुः सम्मते इति यावत् । प्रपूर्वः सूरभ्यनुज्ञाने इत्याह कैयटः । काभ्यां ग्रहणं अश्विनोरश्विनीकुमारयोर्बाहुभ्यां तथा च पूष्णः आदित्यस्य हस्ताभ्यां प्रतिगृह्णामीत्यर्थः । अयं भावः । सूर्य्यस्यानुग्रहात् अश्विनीकुमारदत्तशक्तिभ्यां बाहुभ्यां तथा पूषदत्तशक्तिभ्यां कराभ्यां गृह्णामीत्यर्थः । इति दक्षिणेनादाय

## ॐनमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्क्रन्तामीति अनामिकया त्रिः प्रदक्षिणमालोड्य ॥ १ ॥

सव्ये कृत्वा सव्ये पाणौ स्थितं तं दक्षिणहस्तानामिकया तन्मूललग्नदक्षिणहस्ताङ्गुष्ठया नमः श्यावास्यायेति मंत्रेण प्रदक्षिणं त्रिवारमालोडयति इति भाष्यकारवचनात् । तदेव दर्शयाति । सव्ये पाणौ कृत्वा तं दक्षिणहस्तानामिकया त्रिः प्रयौतीति किं त्रिवारमालोडयेदित्यर्थः । मधुपर्कं समादाय देवस्य त्वेति मंत्रतः । यजमानदत्तं दक्षेण सव्ये पाणौ निधापयेत् । दक्षिणहस्तानामिकया त्रिः समालोडयेद्वरः । तन्मूलेऽङ्गुष्ठमादाय मधुपर्कञ्च सर्वगम् । ॐ नमः श्यावास्यायेति मंत्रेणैव विचक्षण इति वामनपुराणवचनात् ।

ॐनमः श्यावास्यायेति । अथ मंत्रार्थः ॐ नमः श्यावास्यायेति जठराग्निञ्च सम्बोधयति हे अग्ने तुभ्यं नमः । कीदृशाय तुभ्यं श्यावास्याय कपिशमुखाय ते तव अन्नशने अन्नाशने अद्यते इत्यन्नं तस्य अशनं भक्षणं तस्मिन्नन्नाशने ह्रस्वः छान्दसः अकारलोपेन । तथा च तेऽन्नशनेऽन्नभक्षणकाले तत्र यत् आविद्धं निषिद्धं अभक्ष्यभक्षणजन्यपापजनकत्वेन संक्लिष्टदं यत् अदनीयं तन्निष्क्रन्तामि निरस्यामि यच्छुद्धमन्नं तत्त्वमश्नुहीत्यर्थः । इत्यनामिकयेति । इति मंत्रेण अङ्गुष्ठलग्नमूलकया दक्षिणहस्तानामिकया त्रिः प्रदक्षिणमालोड्य । अनामिकाङ्गुष्ठेन च त्रिर्निरूक्षयतीति सूत्रबलात् अनामिकाङ्गुष्ठाभ्यां भूमौ किञ्चिन्निक्षिप्य पुनस्तथैव द्विः प्रत्येकं निःक्षिपेत् । एतदेव विवृणोति । अनामिकाङ्गुष्ठेनेति । अनामिका च अङ्गुष्ठश्च अनामिकाङ्गुष्ठं समाहारद्वन्द्वे एकवद्भावः । तथा च । दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां त्रिर्निरूक्षयति । त्रिवारमपसारयति पात्राद्बहिर्निर्गमयतीत्यर्थः ।

## अनामिकाङ्गुष्ठाभ्यां भूमौ किञ्चिन्निक्षिप्य पुनस्तथैव द्विः प्रत्येकं निक्षिपेत् ।

त्रिः प्रयौति । अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयतीति सूत्राभ्यां प्रयवणनिरुक्षयोर्युगपन्निरूपणात् । मंत्रलिङ्गाच्च । प्रयवणनिरुक्षणयोरव्यवधानात् । प्रतिप्रयवणं प्रतिनिरुक्षणञ्च । मंत्राभ्यासः तथा च । नमः श्यावास्यायेति मंत्रस्य प्रतिप्रयवणं प्रतिनिरुक्षणमधिकृत्य षड्वारं मंत्रपाठः । विलोडनत्रये त्रिवारं मंत्रपाठः । विलोडनानन्तरं भूमिनिःक्षेपणेऽपि त्रिवारं मंत्रपाठः । मंत्रपठनानन्तरमालोडनभूम्याक्षेपणयोरभिधानात् । तथा योगियाज्ञवल्क्यः । संविधाय करस्थं तं मंत्रेणालोड्य निक्षिपेत् । त्रिस्त्रिवारं भाष्यबलान्मन्त्राभ्यासकृतिस्तथेति ॥ १ ॥ आपस्तम्बः । प्रतिप्रयवणं कुर्य्यात्तथाप्रतिनिरुक्षणम् । मन्त्राभ्यासं सूत्रकारभाष्यकारनिरूपणात् ॥१॥ सव्ये पाणौ तं कृत्वा त्रिः प्रयौति अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयतीति सूत्रम् । सव्ये पाणौ तं मधुपर्कं स्थितं कृत्वा दक्षिणहस्तानामिकया त्रिः प्रयौति प्रदक्षिणं त्रिवारमालोडयति । नमः श्यावास्यायेति मंत्रेण तमेव विलोडितं तद्दक्षिणाऽनामिकाङ्गुष्ठाभ्यां मंत्रेण त्रिर्निरुक्षयति । अपसारयति पात्राद्बहिर्निर्गमयतीति भाष्यकारविवरणम इति । तत आचारात इति ततोऽनन्तरं आचारात् देशकुलाचारात् । कन्यायै मधुपर्कं द्रष्टुं दद्यात् । कन्याऽपि मधुपर्कं सम्यगवलोकयेदित्यर्थः । नार्य्यो हि सूक्ष्मतरालोकने चतुरा अतो रोमादिनिरीक्षणार्थं दद्यादिति भावः । यद्यपि महीतमधुपर्कत्यागे पूर्वं दोष एवोक्तस्तथापि त्यागदोषाद्रोमादिभक्षणदोषोऽधिकः । अतो निरीक्षणं मधुपर्कग्रहानन्तरमयुक्तं यतो ग्रहणत्यागप्रायश्चित्तं कुर्य्यात् भक्षयेदिति विधिर्ज्ञायत इति तात्पर्य्यम् । आचारादिति कथनाच्च विधिरकरणे प्रत्यवायाभावादित्येके । वेदधर्मान्देशधर्मान्कुलधर्मांश्च शाश्वतान् । धर्मशास्त्राविरुद्धांश्च न त्यजेद्ज्ञानदुर्बलः ॥१॥ इत्याचारत्यागनिषेधात् । प्रत्यवायशङ्कयानाचारत्यागोऽपीत्यन्य इति भावः । यन्मधुनो मधव्यमिति । तस्य त्रिस्त्रिः प्रा-

# ततआचारान्मधुपर्कं किञ्चित्कन्यायै द्रष्टुं दद्यात् ।

श्नाति यन्मधुन इति मंत्रेणेति सूत्रम् । तस्य मधुपर्कस्यैकदेशं तस्येत्यवयव-लक्षणा षष्ठी । तेन तस्यावयवमेकदेशमादाय यन्मधुनो मधव्यमिति म-न्त्रेण सकृत्प्राश्य पुनरनेनैव मंत्रेणोच्छिष्टाद्वितीयवारं प्राश्य तथैव तृतीय-वारं प्राश्नातीति । तस्य त्रिः प्राश्नातीति सूत्रे त्रिः शब्दानुवृत्तौ पुनस्त्रि-र्ग्रहणं एकद्रव्ये क्रियावृत्तौ सकृन्मंत्रवचनशङ्काव्युदासार्थमिति । तस्य त्रि-स्त्रिः प्राश्नाति यन्मधुन इति मंत्रेण मधुमतीभिर्वा मधुपर्कप्राशनं प्रत्यृच-म् अनामिकाङ्गुष्ठाभ्यामेवेति केचिदिति यावत्सूत्रमित्यर्थः । ननूच्छिष्टः कथं मंत्रमुच्चारयेदित्याशङ्कायामाह । मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । दन्तलग्ने चेक्षुदण्डे नोच्छिष्टो भवति द्विज इति स्मरणात् ॥१॥ मधुपर्क-भक्षणेनोच्छिष्टाभावान्न मन्त्रोच्चारणे दोष इति । अथ मंत्रार्थः । यन्मधुन इति । भो देवा मधुनो मकरन्दस्य यन्मधव्यं मधुनि साधु यत्तन्मधव्यं परम-मुत्कृष्टं रूपं रूपयति प्रकाशयति देहसंघातामिति रूपम् । अन्नाद्यं व्रीह्या-दिवत् प्राणधारकम् अन्नोपादानकं वा अन्नादिरसकदम्बं वा तेन मधुनो मधव्येन परमेणोत्कृष्टेन रूपेण देहसङ्घातप्रकाशकेन अन्नाद्येन अन्नोपादा-नकेन रसेन सर्वरूपापन्नेन अहं परमः सर्वेभ्यो गुणाधिकः मधव्यः मधु-पर्कार्हः अन्नादः सदन्नभोक्ता असानि भवानि इति मन्त्रेण वारत्रयं मधुपर्कप्राशनं प्रति प्राशने चैतन्मन्त्रपाठ इति मूलकारवचनात् ॥ म-धुमतीभिर्वा मधुपर्कप्राशनं प्रत्यृचं मधुवातेति तिसृभिर्वा मधुपर्कप्राश-नं प्रत्यृचं मधुपर्कप्राशनं मधुवातेत्यादितिसृभिर्वा अनामिकाङ्गुष्ठाभ्या-मेवेति केचित् ॥ तथा च पराशरः । यन्मधुनेति मन्त्रेण त्रिस्त्रिरर्घ्यः पि-बेन्मधु मधुमतीभिः प्रत्यृचं मधुवातेत्यादितिसृभिः मधु मधुपर्कं नामैकदे-शे नामग्रहणमिति न्यायात् । तथा च कात्यायनः । प्राश्नाति मधुपर्कं त्रिः पठन् यन्मधुनेति त्रिः । यद्वा मधुमतीभिर्मधुवातेत्यादितिसृभिः प्रत्यृचं मधुपर्कप्राशनं अनामिकाङ्गुष्ठाभ्यामेवेति केचित् तन्न समीचीनम् ।

ॐ यन्मधुन इत्यस्य कौत्स ऋषिर्जगतीछन्दः । मधुपर्को देवता । मधुपर्कप्राशने विनियोगः । **ॐ यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यं तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योन्नादोसानीति अनेनैव वारत्रयं मधुपर्कप्राशनं प्रतिप्राशने चैतन्मंत्रपाठः ततो मधुपर्कशेषमसंचरदेशे धारयेत् ॥**

मधुपर्कप्राशनस्य परमपवित्रतानिदानत्वात् । तदेव दर्शितं मनुना । गङ्गोदकं पञ्चगव्यं मधुपर्कं कुशोदकम् । अन्तर्गच्छेत्तु यस्यांहो हित्वा सर्वाधिकारिकृत् इति । मधुमतीत्यादीनां मधुच्छन्दऋषिस्त्रिष्टुप्छन्दो मधुप्रदो देवता मधुपर्कप्राशने विनियोगः । मधमतीर्न्न इषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि स्वाकृतोऽसि इति । मन्त्रार्थः । हे सोम त्वं नोऽस्माकं इषोऽन्नानि मधुमतीः मधुररसोपेताः कृधि कुरु । हे सोम ते तव अदाभ्यमहिंस्यं जागृवि जागरणशीलं यन्नामास्ति सोमेति हे सोम तस्मै तन्नामवते तुभ्यं सोमाय स्वाहा । दत्तमस्तु स्वाहेत्यक्षरद्वयमुक्त्वा निष्क्रमेत् उरु विस्तीर्णमन्तरिक्षमन्वेमि अनुगच्छामि । हे प्राण त्वं स्वयमेव कृतोसि स्वयमुत्पन्नोऽसीति यावत् । ( अ० ७—कं—२ ) मधुवातेत्यादीनां गौतम ऋषिर्गायत्री छन्दो विश्वेदेवा देवता । मधुपर्कप्राशने विनियोगः ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधुद्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्य्यः । माध्वीर्गावो भवन्तु नः । मन्त्रार्थः ऋतं यज्ञमिच्छतीति ऋतायन् तस्मै ऋतायते यजमानाय वाता वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः । सिन्धवः स्यन्दमाना नद्यः समुद्रा

वा मधु मधुमत् रसवत् उदकं क्षरन्ति स्रवन्तु । " तिङान्तिङ् " इति लोटो लडादेशः । औषधीः औषधयः नोऽस्माकं माध्वीः मधुररसोपेताः सन्तु । नक्तं रात्रिर्नोऽस्माकं मधु मधुमत् मधुररसोपेतमानन्दकरमस्तु । उताऽपि च उषसो दिवसा अपि मधुमन्तः सन्तु । पार्थिवं रजः पृथिवीलोको मातृभूतो मधुमत् मधुररसोपेतमस्तु । पिता पितृभूतो द्यौः द्युलोको मधुमान् मधुररसोपेतोऽस्तु । वनस्पतिरश्वत्थादिर्नोऽस्माकं मधुमान् रसवान् यज्ञसाधनभूतोऽस्तु । सूर्य्यो मधुमान् सन्तापराहित्यलक्षणमाधुर्य्यरसोपेतोऽस्तु । गावः यज्ञसाधनभूताः रश्मयः नोऽस्माकं माध्वीर्मधुमत्यो रसवत्यो भवन्तु । रसो वै मध्विति श्रुतेः । वातादीनि रसवन्त्यस्माकं भोग्यानि भवन्त्विति सर्वोऽर्थः । [ अ. १३. कं. २७–२८–२९ ] इति मधुमतीभिर्वा मधुवातादिभिर्वा मधुपर्कप्राशने चेमौ विनियोगौ विनियोज्याविति ज्ञेयम् । मधुपर्कशेषप्रतिपत्तिमाह । पुत्रायान्तेवासिने वोत्तरआसीनायोच्छिष्टं दद्यात् सर्व्वं वा प्राश्नीयात् प्राग्वा संचरे निनयेत् । इति सूत्राणि मधुपर्कशेषसन्धारणे प्रमाणानि पुत्राय सूनवे अन्तेवासिने उपनयनप्रभृतिविद्यार्थित्वेनाचार्य्यकुलवासिने शिष्याय कीदृशाय उत्तरआसीनाय इत्युभयोर्विशेषणम् । आभ्यामुच्छिष्टं मधुपर्कं प्रयच्छेत् । उच्छिष्टं प्राशितशेषमित्यर्थः । वा पक्षान्तरे स्वयं स्वयमेव सर्वं प्राश्नीयात् । वा पक्षान्तरे प्राक् पूर्व्वस्यां दिशि असंचरे जनसंचारवर्जिते देशे निनयेत्त्यजेत् । अत्र पक्षान्तरकल्पना तु पूर्वपूर्वाऽसम्भवे उत्तरोत्तरप्रतिपत्तिं कुर्य्यादिति भाष्यकारविवरणम् । जयरामभाष्यकारेण तु विकल्पेऽपि व्यवस्था कृता व्यवस्था त्वनियमितस्य नियमनम् । तदेव दर्शयति । आचार्यः शिष्याय ऋत्विक्प्रियपुत्राय वरतातौ सर्वं प्राश्नीयातां राजा सञ्चरदेशे पूर्वस्यां दिशि निनयेदिति ॥ सर्वेषां वा सर्वे पक्षा इत्यन्ये तथा चापस्तम्बः । शिष्याय शेषमाचार्यः पुत्रायर्त्विक्प्रियाय च । शेषं तातो वरो नोज्झेत्प्राग्राजा संचरे त्यजेत् । सर्वे पुत्राय वा शेषं दद्युः

ततस्त्रिराचामेद्वरः वाङ्म आस्येऽस्तु नसोर्मे प्राणोऽस्तु अक्ष्णोर्मे चक्षुरस्तु कर्णयोर्मे श्रोत्रमस्तु बाह्वोर्मे

शिष्याय तम्विना । दद्युः शिष्यं विना पूर्वेऽसञ्चरेऽद्युश्च सर्वत इति । अस्यार्थः सर्वे वा शेषं मधुपर्कं पुत्राय दद्युः तं विना पुत्रं विना येषां पुत्रः पार्श्वे नास्ति वा येषां पुत्रो विद्यते नैव ते च शिष्याय दद्युः शिष्यं विना येषां शिष्यः पार्श्वे नास्ति येषां वा विद्यते नैव ते च पूर्वे पूर्वस्मिन्दिग्भागेऽसंचरेऽसंचरदेशे निक्षिपेयुः । च विकल्पेऽथवेत्यस्यार्थे । अथवा सर्वतः इति सर्वं मधुपर्कमद्युर्भक्षयेयुरित्यर्थः । आचमनीयमाचमनीयमित्यादिनाचमनविधिनाऽऽचान्तोऽपि पूर्वं अथ च मधुपर्के च सोमे च नोच्छिष्टो भवति द्विज इत्यादि स्मृतिबलात् मधुपर्के भक्षितेऽप्यशुचित्वाभावेनाचमनाप्राप्तावाह । अनाचान्तस्येन्द्रियस्पर्शनमनुचितमिति स्मृत्युक्तिबलात् । मधुपर्कानन्तरं वाङ्म आस्ये इत्येवमादिभिर्मन्त्रैर्यथालिङ्गं इति रत्नाकरे आचम्य आचमनं कृत्वेति सूत्रभाष्ययोर्निरूपणात् । एकवचनेन यद्यपि सकृदत्र जलभक्षणं ध्रियते तथापि शास्त्रबलादाचम्य आचामेदाचमनं कृत्वा इत्यादिपदैस्त्रिवारमेव जलभक्षणं कर्त्तव्यम् । अतएव मूलकारेण ततस्त्रिराचामेदित्याचमनस्वरूपाभिधानमेव कृतं न तु नववारं जलभक्षणमिति । यथाचारादर्शे ब्रह्मपुराणीयवचनम् शौचानन्तरस्थले । पादयोर्द्वे गृहीत्वा तु सुप्रक्षालितपाणिना । त्रिराचम्य ततः शुद्धं स्मृत्वा विष्णुं सनातनम् ॥१॥ आचमनस्वरूपमाह । हस्तगं प्रथमात्तीर्थाद्दक्षिणात्रिः पिबेज्जलम् । अशब्दमनवस्रावमबहिर्जान्वबुद्बुदम् ॥१॥ इति नरसिंहपुराणे । दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत्पुनः । त्रिः पिबेद्वीक्षितं तोयमास्यं द्विः परिमार्जयेत् ॥१॥ हारीतः अन्तरूर्वोररत्नी कृत्वा त्रिरपोऽशब्दं पिबेदित्यर्थः । याज्ञवल्क्यः । अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः । शुध्येयुः स्त्री च शूद्रश्च सकृत्स्पृ-

**बलमस्तु ऊर्वोर्मे ओजोऽस्तु अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्त्विति प्रत्येकं सर्वगात्राणि संस्पृशेत् ।**

ष्टाभिरन्ततः ॥१॥ अन्ततओष्ठप्रान्तेन सकृत्स्पृष्टाभिर्न तु त्रिवारं भक्षिताभिरद्भिरित्यर्थः । गौतमः । हृदयस्पृशस्त्रिरपः आचामेत । पाणिं चाभ्युक्ष्य खानि चोपस्पृशेत् शीर्षण्यानि मूर्ध्नि दद्यात्करम् इति । हृदयस्पृश इति ब्राह्मणपक्षे । आचमनीयतीर्थमाह मनुः । ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन ॥१॥ विप्र इति आचमनकर्तृमात्रोपलक्षणम । अत्र संभवे ब्रह्मतीर्थेनैवाचमनम । नित्यकालमिति श्रवणात व्रणादिना ब्रह्मतीर्थविरोधे कायत्रैदशिकाभ्यामिति व्यवस्थाविकल्पः । पित्र्यन्तु सदा निषिद्धं न कदाचनेत्यभिधानात । तीर्थान्याह याज्ञवल्क्यः । कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात ॥१॥ आदेशिनी तर्जनी एवं सर्वत्र स्मार्तवचनसिद्धं त्रिवारं हस्तस्थजलभक्षणरूपमाचमनं कृत्वाङ्गन्यासं कुर्यात । वक्ष्यमाणमन्त्रैरिति । अथाङ्गन्यासविधिः तत्र सूत्राणि । आचम्य प्राणान संस्पृशति वाङ्मे आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोरिष्टानि मेङ्गानि तनूस्तन्वा मे सह इति । अथैतेषां सूत्राणां भाष्यम् । आचम्य प्राणानिन्द्रियस्थानानि संस्पृशति सजलमालभते तद्यथा वाङ्मे आस्येऽस्त्विति मुखं कराग्रेण अङ्गुलित्रयमेव कराग्रं नसोर्मे प्राणोऽस्त्विति तर्जन्यङ्गुष्ठाभ्यां युगपद्दक्षिणादिनासारन्ध्रे अक्ष्णोर्मे चक्षुरस्त्विति मध्यमाङ्गुष्ठाभ्यां युगपद्दक्षिणादिचक्षुषी कर्णयोर्मे श्रोत्रमस्त्विति अनामिकाङ्गुष्ठाभ्यां दक्षिणोत्तरौ कर्णौ बाह्वोर्मे बलमस्त्विति अङ्गुष्ठकनिष्ठाभ्यां दक्षिणोत्तरबाहू ऊर्वोर्मे ओजोऽस्त्विति सम्मीलितकराङ्गुलहस्तेनोरू अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्त्विति शिरःप्रभृतीनि पादान्तानि सर्वाण्यङ्गान्युभाभ्यां हस्ताभ्यामालभते मे इत्यस्य सर्वत्रानु-

## ततो यजमानद्वारा गौर्गौर्गौरिति पाठः । अत्र वरयजमानाभ्यां तृणच्छेदनमाचारो न तु विधिः । अत एव पद्धतिषु ततो वरस्तृणं यजमानेन सह गृहीत्वाऽग्रिममन्त्रंपठेत

। माता रुद्राणामिति मन्त्रस्य ब्रह्मा ऋषि-

षड्ङ्गः । अस्त्वित्यध्याहारः साकांक्षत्वात । आचम्येति पदस्यायमभिप्रायः । अनाचान्तस्य प्राणायतनस्पर्शनं माभूदित्याचम्येति अङ्गानि तनूरिति बहुवचनात्सन्त्विति बहुवचनस्यैवाध्याहारः । अथ मन्त्रार्थः । मम वाक् वागिन्द्रियमास्ये वदनेऽस्तु नसोर्नासिकयोः प्राणः प्राणवायुः अक्ष्णोर्नेत्रगोलकयोश्चक्षुरिन्द्रियं श्रोत्रं श्रवणेन्द्रियं बलं शक्तिः ओजः सामर्थ्यं मे मम तन्वा देहस्य तनूरङ्गानि च सह युगपत अरिष्टानि व्याध्यादिपीडारहितानि दुःखाद्यनुपहितानि सन्त्वित्यध्याहारः । अङ्गन्यासे । दक्षः प्रक्षाल्य हस्तौ पादौ च त्रिः पिबेदम्बु वीक्षितम । संवृत्त्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम ॥ १ ॥ संवृत्त्य तिसृभिः पूर्वमास्यमेवमुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम ॥२॥ मध्यमाङ्गुष्ठयोगेन चक्षुः श्रोत्रे पुनः पुनः । अङ्गुष्ठानामिकाभ्याञ्च स्पृशेत स्कन्धौ ततोऽग्रतः ॥३॥ तिसृभिस्तर्जनीमध्यमानामिकाभिः तथा च शङ्खः । तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् । मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः ॥१॥ अङ्गुष्ठानामिकायाश्च योगेन श्रवणे स्पृशेत । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः ॥ २ ॥ स्पृशेदालभेतेत्यर्थः । प्रत्येकं सर्वगात्राणि शिरःप्रभृतीनि हस्तद्वयेन संस्पृशेदित्यर्थः । इत्याचमनविधिः ॥

**ततो यजमानद्वारेति** । अत्र वरयजमानाभ्यां तृणच्छेदनमाचारो न तु विधिः अत एव पद्धतिषु ततो वरस्तृणं यजमानेन सह गृहीत्वाऽग्रिममन्त्रंपठेदित्येव लिखितमिति । आचान्तोदकाय शासमादाय

त्रिष्टुप्छन्दः शौरिर्देवताऽभिमन्त्रणे विनियोगः । ॐमाता रुद्राणां दुहिता वसूना ँ स्वसादित्यानाममृतस्य नाभिः प्रनु वोचं चिकितुषे जनाय मागामनागाम-दितिं वधिष्ट मम चामुष्य च पाप्मा हतः ॥

गौर्गौर्गौरिति त्रिः प्रत्याह । इति सूत्रम् । आचान्तोदकग्रहणात् पुनराचमनमित्येके । अपरे त्वाहुः । आचान्तमुदकं येन स आचान्तोदकस्तस्मै । तादर्थ्ये चतुर्थी तदर्थं शासं शस्त्रमादाय तादर्थ्ये चेति पश्वालभनस्य तदर्थत्वात् खड्गं गृहीत्वा यजमानः गौर्गौर्गौरालभ्यतामित्याह ब्रवीति । ततोऽर्घ्यस्तु तं प्रत्याह । मातारुद्राणामितीमं मन्त्रम् । अस्यार्थः । अहं चिकितुषे चेतनावते जनाय यजमानाय । नु वितर्के । छन्दसि व्यवहिताश्चेति प्रवोचं ब्रवीमि । अट्लोपः छान्दसः । किं वदसीत्याकाङ्क्षायामाह । मां तोष्टुमिति शेषः । यूयं मां तोष्टुं मत्सन्तुष्टयै मा गां वधिष्ट । न माङ्योग इत्यडभावः । मा गां हत इत्यर्थः । गां कीदृशीं अनागां अनागसं अनपराधां । पुनः कीदृशीं । अदितिं अखण्डनीयां दितिः खण्डनं हिंसा यस्यां नास्ति तां । ब्राह्मणं गां तथा कन्यां हन्यादज्ञानतोऽपि यः । निरये भुज्यते तावद्यावदिन्द्राश्चतुर्दश इति स्मृतिवचनात् । यतः सा रुद्राणां माता श्रीमहारुद्रो नान्दिकेश्वररूपेण ऋषिभीतः तद्गर्भद्वारा आविर्बभूवेत्यर्थः । बहुवचनन्तु रुद्रोत्कृष्टतया । किञ्च । वसूनां दुहिता पुत्री देवदानवेषु समुद्रं मथितुमुद्यते तत्र प्रयासबाहुल्येन श्रमितेषु अतएवासमर्थतयापहारितमनस्केषु सत्सु श्रीमता विष्णुना स्वयमेव सा समुद्रमथनद्वारा जनिता । अतो विष्णुपुत्रीति प्रकृते वसूनां विष्णोरंशभूतानां पुत्रीत्वङ्गविविष्णुपुत्रीत्वेनैव सम्पन्नम् इति भावः । अत एव वैष्णवी सुरभी माते-

**ॐउत्सृजत तृणान्यत्तूद्धृत्योत्सृजेत् इति ब्रूयात्। उ-**
त्यादि श्रूयते । किञ्चादित्यानां स्वसा भगिनी देवानामपि विष्णोरुद्भव-त्वात् । नारायणात् द्वादशादित्या इति श्रुतेः । अमृतस्य देवभक्ष्यस्य क्षी-रस्य नाभिराश्रयः उत्पत्तिस्थानमिति यावत् । तथा च गावः सर्वेषां ममा-पि च सर्वथा अहिंस्याः अत्र च गोरभिमन्त्रणे पक्षद्वयत्वेन मन्त्रेऽपि तस्योभयविधत्वं तदेव दर्शयति । आलम्भनपक्ष उत्सर्गपक्षश्चेति द्वयम्। तत्र यद्यालभेत गां तदा माता रुद्राणां इत्यादि वधिष्टेत्यन्तं मन्त्रं पठित्वा अग्रे मम चामुष्य यजमानस्य पाप्मान॰ हिनोमीति पठेत् । उत्सर्गपक्षे तु अर्घ्यो यदि गामुत्स्रष्टुमिच्छेत्तदा माता रुद्राणामित्यादि वधिष्टेत्यन्तं पठित्वा अग्रे मम चामुकशर्मणो यजमानस्य च पाप्मा हतः हंतु ॥

ॐउत्सृजत तृणान्यत्तु इति ब्रूयात् । ॐम् इत्यन्तमुपांशु पठित्वो-त्सृजत तृणान्यत्तु इत्यन्तमुच्चैः पठेत् । नन्वेष पक्षो न समीचीनः सूत्र-विरोधात् । तदेव सूत्रं दर्शयति ! नत्वेवामा॰ सोऽर्घ्यः स्यादधियज्ञमधिवि-वाहं कुरुतेत्येव ब्रूयात् इति । सूत्रार्थः । नत्विति । तु शब्दः पक्षव्यावृत्तौ अर्घ्यो वरादिरमांसः पश्वालम्भविवर्जितो नैव स्यात् । न च यद्यालभेत य-द्युत्सुसृक्षेदित्यनेन सूत्रद्वयेन गवालम्भने विकल्प इति वाच्यम् । नत्वेवा-मांसोऽर्घ इत्यनेनार्धमात्रे एव पदेनावधारणार्थेन गवालम्भनस्य नियमेन व्रीहीनवहन्यादेवेतिवदवश्यं विधानात् । न च तथा सति द्वयोर्विरोधा-दप्रामाण्यं स्यादिति वाच्यम् । व्यवस्थाया विहितत्वात् । व्यवस्थामाह । यस्माद्यज्ञविवाहयोरमांसोऽर्घो न भवतीति स्मर्य्यते तस्माद्यज्ञमधिकृत्य विवाहञ्चाधिकृत्य च पाप्मानं हिनोमीत्येव वक्तव्यम् । यज्ञविवाहवर्ज्जम-न्यत्र पश्वालम्भे विकल्पः । इति कर्काचार्य्यः । अपरे त्वेवमाहुः । यद्यपि यज्ञविवाहयोरेवालम्भस्यावश्यकत्वेन विधानम् । तथापि गोवाजिनरमे-धाश्च विवाहे गोर्वधस्तथा परक्षेत्रे सुतोत्पत्तिः कलावेतानि वर्ज्ज-

# त्सृजेत्तु तामिति तृणं छिन्द्यादित्युत्सृजेत् त्यजेत् ।

येत् । अग्निहोत्रं गवालम्भं संन्यासं पैतृके पलम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥१॥ इति कालादर्शादिनानाधर्मशास्त्रप्रबन्धेषु लिखितत्वात् । तथाच मनुः । न परं पातकं घोरं कलौ गोहत्यया समम् ॥ इति बह्वीषु स्मृतिषु निरूपणात् । कलौ गवालम्भस्य प्रतिषेधात् गोप्रतिनिधित्वेन पश्वन्तरस्यैवालम्भ इति प्रतिनिधित्वमाह । गवालम्भे स्मार्तः पशुः पायसं वा इति श्रुतेः । स्मार्तः पशुः वार्धुषुको रक्तवर्णोऽजो निरूपितः । अजशब्दवाच्येऽपि देवानामृषीणाञ्च व्यासीयमहाभारते शान्तिपर्वणि विवादो निरूपितः । देवाश्चाऽजपदवाच्यो मेषः पशुरिति प्राहुः । अतोर्घ्यायाजादिमांस एवाभिहितो यज्ञविवाहादिषु कलौ अजादिहवनमपि विधिना अविधिहतस्य मांसभक्षणे दोषावाप्तेरिति ज्ञेयम् । ऋषयस्तु नीवाराद्युत्पन्नं गोधूमतण्डुलमाषादिसंसाधितप्रशस्ततरविचित्रं मनुष्यान्नं घृतखण्डाद्युपेतमजशब्दवाच्यं प्राहुः । तथा च विवाहादिषु अर्घ्याय गोधूमादिसंसाधितघृतखण्डादिसंस्कृतविचित्रस्वादुमन्मिष्टमन्नमेव सपरिवाराय भक्ष्यं देयमिति ॥ अयं भावः । यद्यपि मधुपर्के गवालम्भ आचार्य्येणोक्तः तथापि अस्वर्ग्यत्वाल्लोकविद्विष्टत्वान्न विधेयः । अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति याज्ञवल्क्याद्यस्मृतिषु निषेधदर्शनात् । कलौ निषेधादेवास्यास्वर्ग्यत्वसिद्धिः तथा च योगियाज्ञवल्क्यः । वाचाऽपि नवदेद्धीमान गवामालम्भनं कलौ । मधुपर्केऽपि वै दद्यादर्घ्यायान्नं सुसंस्कृतम् । गोधूममाषमुद्गानां घृतखण्डादिभिः शुभैरिति । शुभैः शुद्धः घृतखण्डादिभिस्सुसंस्कृतमित्यर्थः।तथा च बृहत्पराशरः । कलौ वाङ्मात्रगोमेधो निरये प्राप्नुयान्नरम् । पितृभिः सह धर्मात्मा नैव कुर्यादतश्च तम् ॥१॥ इति । तथा च गौर्गौर्गौरित्यादितृणान्यत्त्वित्यन्तं कर्म गोसमुत्सर्गे विद्यान्नान्यथेत्येके । अपरे तु । पद्धतिलिखितविधित्यागो नोचितो विधिलो-

**यद्यपि सकृत्संवत्सरस्येति तथाप्यसकृत्संवत्सरस्य सोमेन यजेत् कृताघ्यी एवैनं याजयेयुर्नाकृताघ्या इति श्रुतेः । चत्वारः पाकयज्ञा हुतोऽहुतः**

पप्रसङ्गात् । अतो यत्र गौः साक्षादागता तत्रालंभतामिति पदभावेनैव यजमानो गौर्गौर्गौरित्येतावन्मात्रमेव पठेत् । ततो वरो मातारुद्राणामित्यादि मम चामुष्य शर्मणो यजमानस्य पाप्मा हतः ॐ उत्सृजत तृणान्यत्त्वित्यन्तं पठित्वा गां समुत्सृजेत् । साक्षाद्गोरभावे कुशमयीं गां विधाय तत्र तदुपरि पूर्ववद्विधिं विधाय तृणान्यत्त्वित्यन्तं पठित्वा मोचयित्वोद्धृत्य कुशान् समुत्सृजेदिति तथा चापस्तम्बः । ऋष्युद्दिष्टं कलौ नैव पापं गोहत्यया समम् । अतो विवाहे यज्ञे च गामानीय समुत्सृजेत् ॥१॥ इति । गोरभावे कुशमयीं कृत्वा तत्र विधिं चरेत् । गामुद्धृत्य कुशान्पश्चात्प्रणिपत्य समुत्सृजेत् ॥१॥ इति सुमन्तुः । ऋषिप्रणीतं न कलौ पापं गोहत्यया समम् । वाचाऽपि गां हिनोम्युक्त्वा प्रायश्चित्तं समाचरेत् ॥१॥ तेनैवाऽहितो मन्त्रे पूर्वपक्षः कलौ युगे । गां च साक्षात्समानीय यथाविधि समुत्सृजेत् ॥२॥ गोसमुत्सर्ज्जनाशक्तौ विप्रमानीय तत्र वै । ततश्च गौर्गौरित्यादि तस्योपरि विधिं चरेत् । मानेत्यादि पठित्वा च भक्ष्यं दत्वा समुत्सृजेत् ॥३॥ गोब्राह्मणयोस्तुल्यत्वात् ब्राह्मणस्य गौर्गौरित्युक्त्वा वाऽपि न दोषः विधिपरिपूर्णता चेति । तत्र ब्रह्मवैवर्ते । विधाय वाऽपि गां कौशीं विधिं तत्र समाप्य च । समुद्धृत्य च तां कौशीमैशान्यां तान् कुशान् क्षिपेत् ॥१॥ इति वक्ष्यमाणा ऋत्विजः इत्युक्तम् । तन्नियममाह ।

**यद्यपीति ॥** यद्यपि संवत्सरस्य मध्ये यजमानो गुर्वादीन्सकृत् यजेतेत्युक्तम् । तथापि यदि संवत्सरस्य मध्ये पुनः सोमेन यजेत् तदा कृताघ्या एवर्त्विजस्तं याजयेयुर्न पुनरकृताघ्या इति । अतः परिसंवत्सरा-

प्रहुतप्राशित इति पञ्चसु बहिःशालायां विवाहे चूडाकरणे उपनयने केशान्ते सीमन्तोन्नयने उपलिप्त उद्धृत उल्लिखितेऽवोक्षितेऽग्निमुपसमाधाय निर्मन्थ्यमेके विवाहे ॥

निति संवत्सरोपर्य्येव यजद्भिः ऋत्विजोऽर्घ्या इति यदुक्तं तदपवादोऽपि जातः कृतोऽर्घो येषां ते कृतार्घ्या एव सन्तः याजयेयुर्यज्ञं कारयेयुः नाकृतार्घ्या याजयेयुरिति श्रुतिवचनात् सोमेन यजेतेत्यनेन सोमयागार्थमेव वृता ऋत्विजोऽर्घ्या इति गम्यते न यागान्तरार्थे । चत्वार इति पच्यते श्रप्यते ओदनादिकमस्मिन्निति पाको गृह्याग्निः तत्र पाकेनान्यत्रेति भावः । पाके यज्ञाः पाकयज्ञाः यतो वैवाहिकेऽग्नौ कुर्वीत ग्राह्यं कर्म्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृहीति मनुना दैनंदिनपाको गृह्येऽग्नौ समर्प्यते ते चत्वारः पाकयज्ञा भवन्तीति शेषः । कोऽस्याभिसन्धिरुच्यते विवाह उपक्रान्तः तत्र बहिः शालायां कर्मेष्यते तत्प्रसङ्गेनान्यत्रापि यत्र यत्र बहिःशाला तदर्थमभिधीयते चतुःप्रकाराः पाकयज्ञाः तानाहुः हुत इति यत्र होममात्रं सायंप्रातः होम एव क्रियते स हुतः यथा नित्यहोमः अहुतश्चेति यत्र न होमः होमबलिरहितं कर्म्म यथा प्रस्ताराराेहणम् । प्रहुत इति यत्र होमो बलिकर्म्म भक्षणं च यथायज्ञादिकर्म्म प्राशित इति यत्र प्राशनमात्रं न होमादिः न होमो न बलिः यथा सर्वासां गवां पयसा पायसं श्रपयित्वा ब्राह्मणान् भोजयेदिति श्रुतेः । यथा सर्वगोपयसः पायसश्रपणानन्तरं ब्राह्मणभोजनमित्थं चतुर्विधाः पाकयज्ञाः । पञ्चस्विति । पञ्चसु विवाहादिसंस्कारकर्म्मसु बहिःशालायां गृहाद्या बहिःशाला तस्यां । "बहिःशाला तु मण्डप" इति कोशोक्त्या मण्डपे इति यावत् । तस्यां कर्म्म भवति । एषु बहिःशालाकार्य्येत्यर्थः बहिःशब्द-

**उदगयन आपूर्य्यमाणपक्षे पुण्याहे कुमार्य्याः पाणिं गृह्णीयात् तिसृपूत्तरासु मघानुराधाकरमूलरेव-**

सामर्थ्यादग्निर्लौकिक एव ज्ञेयो यथा विवाहे परिणयने चूडाकरणे क्षौरकर्म्मणि उपनयने मेखलाबन्धे केशान्ते गोप्रदानकर्म्मणि सीमन्तोन्नयने गर्भसंस्कारकर्मणि एतेषां पञ्चानां बहिःशालायामनुष्ठानम् । अन्यत् गृहाभ्यन्तरे मुख्यशालायामेव उपलिप्ते गोमयोदकेन उद्धृते स्फ्येन स्रुवेण वा उल्लिखिते तिसृभी रेखाभिः अवोक्षिते उदकेनाभ्युक्षिते बहिःशालागृहयोरन्यतरस्मिन्प्रदेशेऽग्निमुपसमाधाय अग्निं लौकिकमावसथ्यं वा उपसमाधाय स्थापयित्वा । अयञ्च लेपनादिविधिर्नापूर्वः अपि तु परिसमूह्येत्यादिपूर्वोक्तस्यैवानुवादः ततश्चात्रानुक्तमपि परिसमूहनं उद्धरणञ्च भवति । यत्र क्वचन होमस्तत्र सर्वत्र एष एव विधिरिति वचनात् । अत्राऽपि विवादमाह एके परिसमूहनादेरकृतत्वात् उपलिप्त उद्धृतावोक्षित इति वाक्यं परिसमूहादिव्युदासार्थमित्याहुः । अपरे तु यतो गृह्यस्थालीपाककर्म्मणि परिसमूहनाद्युक्तम् अतोऽगृह्यार्थोऽयमारम्भः विवाहादयश्चाग्निविषयाः यत्र वैवाहिकोऽग्निस्तदीयमेव कर्म तत्रेष्यत उपग्रहाविशेषात् । तस्मादगृह्यार्थमुपलिप्त उद्धृतावोक्षितग्रहणम् । इति प्राहुः तदपि न । यत्र क्वचिद्धोमः तत्रैवैषविधिरित्यनेन नित्यप्राप्तत्वात् । कथं तर्हीदमुक्तम् । श्रूयतां सूत्रकृतोऽयमभिप्रायः । यत्र क्वचिद्धोम इत्यनेन परिसमूहनादीनां प्राप्तिस्तेषामग्न्यर्थत्वात् यत्र यत्राग्नेः स्थापनं तत्रतत्र ते कर्त्तव्या इति । तथा च लिङ्गं । उद्धृते वावोक्षितेऽग्निमादधीतेति । तस्मादेष एव विधिर्यत्र क्वचिद्धोम इत्यनेन स्थालीपाकादिषु परिसमूहनादेरप्राप्तिस्तत्प्राप्त्यर्थमिदम् उद्धृतावोक्षितग्रहणमुक्तम् । निर्मन्थ्यमेके विवाहे । एके आचार्य्या विवाहे पाणिग्रहे निर्मन्थ्यमारणेयमग्निं वैवाहिकहोमाधिकरणामिच्छन्ति अपरे लौकिकाग्निमेवात्रेच्छन्ति अतो विकल्पः । मतभेदेन विभाषेति वचनात् । अथ विवाहाख्यं

**तीषु च स्वातौ मृगशिरसि रोहिण्यां वा त्रिषु त्रिषूत्त-रादिषु स्वातौ मृगशिरसि रोहिण्यां वा तिस्रो ब्रा-**

कर्माह । उदगयने मृगादिराशिषट्कस्थिते रवौ विना वैसारिणमापूर्य्यमाणपक्षे शुक्लपक्षे तिसृषु उत्तराफल्गुनीआषाढाभाद्रपदासु च पुनर्मघानुराधाकरमूलरेवतीषु च पुनः स्वातौ मृगशिरसि रोहिण्यां वा । वाशब्दः पुनरर्थे । तथा गर्गः । ध्रुवानुराधामृगमूलरेवतीकरं मघास्वातिरदूषणो गणः । रवेरमीनो मकरादिषड्ग्रही करग्रहे मङ्गलदा मृगीदृशाम् । इति । मकरादिं समारभ्य षण्णां ग्रहाणां राशीनां समाहारो मकरादिषट्ग्रही कीदृशोऽमीनः चैत्रमासरहितः अदूषणो वेधादिदूषणरहितः पुण्याहे ज्योतिःशास्त्रोक्तविष्ट्यादिदोषरहिते कुमार्य्या अनन्यपूर्वायाः कन्यायाः पाणिं गृह्णीयात् पाणिं हस्तं स्वगृह्योक्तविधिना गृह्णीयात । उदगयनादौ देवान कुर्वीतेति श्रुत्यागम्यते । आपूर्य्यमाणपक्षोऽपि देवानामेव । य आपूर्य्यते अर्द्धमासः स देवानामिति श्रुतेः । पुण्याह इति स्मरणात् सर्वं देवविषयमेतदित्यवगम्यते । कुमार्य्या ग्रहणं विंशतिप्रसूताव्युदासार्थं तेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्यानियमः । यावद्विंशतिवर्षशब्दानां प्रवृत्तिर्यस्यां भवति साष्टाविंशतिवार्षिकी यावत् तावत् प्रसूताऽपि संजातकन्याबालकाऽपि यदा स्यात्तथापि तस्या विवाहः । अष्टाविंशतिवर्षपर्य्यन्तं दुहितृपुत्रवत्यपि यदीच्छां करोति तदान्येन पाणिं गृह्णीयादिति तस्याः पुनर्भूविवाहविधानेन विवाहः । तस्मिन्नायनपक्षादिनियमः नक्षत्रनियमस्त्वस्ति । तन्नियममाह । त्रिषु त्रिषूत्तरादिषु इति । उत्तराफल्गुन्याषाढाभाद्राआदिर्येषां तान्युत्तरादीनि तेषु कतिषु त्रिषु तथाहि उत्तराहस्तचित्राउत्तराश्रवणधनिष्ठा उत्तरारेवत्याश्विनीति त्रितयत्रिकं स्वातौ वा मृगशिरसि रोहिण्यांवा वाशब्देन शुभविवाहनक्षत्रेषु नक्षत्रत्रिकमेव तदधिपतीनां वायुचन्द्रविधातृणां सार्वजनीनत्वात् । अमङ्गलविवाहे नक्षत्रत्रयमेव

**ह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य सर्वेषां शूद्रामप्येके मन्त्रवर्ज्जम् ॥**

गृह्यते । विवाहस्यास्य मङ्गलविवाहादुत्तरत्वेन उत्तराणां तिसृणां ग्रहणमिति । उक्तद्वादशनक्षत्राणामन्यतमेऽन्यपूर्वायाः पुनर्भूविवाहः सामान्येनोक्त इति । कुमार्य्याः पाणिं गृह्णीयादिति सामान्येनोक्तम् पूर्वमिदानीं विशेषेणाह । तिस्रो ब्राह्मणस्येति । ब्राह्मणस्य द्विजाग्र्यस्य वर्णानुपूर्व्येण वर्णक्रमेण तिस्रो ब्राह्मणीक्षत्रियावैश्या इति विवाह्याः भवेयुः । राजन्यस्य क्षत्रियस्य द्वे क्षत्रियावैश्ये विवाह्ये भवतां । वैशस्य एका वैश्या एव विवाह्या भवेत् । वर्णानुपूर्व्येणेति आनुपूर्व्यग्रहणात् व्युत्क्रमो निषिद्ध इत्यर्थः । सर्वेषामिति । सर्वेषां ब्राह्मणक्षत्रियविशां एके आचार्य्याः शूद्रामपि विवाह्यां मन्यन्ते । तत्र विशेषमाह । मन्त्रवर्ज्यं । मन्त्ररहितं यथा भवति तथा । अत्र द्विजातीनामपि शूद्रापरिणयने आचार्य्येण मन्त्रवत्क्रियानिषेधात् । शूद्रस्य तु शूद्रापरिणयने यन्मन्त्रवद्धोमादि कर्म्म कुर्वन्ति तदशास्त्रीयम् । एके द्विजातीनां शूद्राविवाहं न मन्यन्ते शूद्राया धर्म्मकार्य्येष्वनधिकारात् । अनधिकारत्वमेव दर्शयति । रामा रमणायोपेयते न धर्म्माय कृष्णजातीयेति निरुक्तकारपारस्करगाचार्य्यवचनात् । अतो रमणार्थं शूद्रापरिणयनं पक्षे एव एवं सति षण्मासदीक्षासंवत्सरदीक्षानन्तरं अग्निं चित्वा प्रथमं न रामामुपेयात् इति कथं निषेध उपपद्यते प्राप्तिपूर्वको निषेध इति न्यायात् । यदि रामोढा न स्यात्तदाऽग्निचितः कथं तत्प्रथमगमनं प्रतिषिध्येत तस्माच्छूद्रापरिणयनं भोगार्थं इच्छया कुर्वतो न शास्त्रातिक्रमः धर्म्मप्रजारत्यर्थो हि विवाहोऽन्यः भोगार्थ एव शूद्राया विवाह इति । अथ प्रसङ्गात् धृताया भार्याया अपि विवाहो निरूप्यते । अथान्यपतिविधानविधिः । तत्र प्रमाणं धर्म्मशास्त्रे । पत्यौ नष्टे मृते क्लीबे पतिते व्रजिते तथा । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते इति ।

तत्र शुभदिने पतिम्वरा स्वाभिलषितं वरं देवरादिकमन्यं वा स्वाभीष्टं पवित्रचरितं जितेन्द्रियं पुरुषं फलपुष्पादिकमादाय मन्त्रपाठपूर्वकं वराय स्वयं ब्राह्मणद्वारा वा दद्यात् । तत्र मन्त्रः । ॐ अस्मिन्कालेऽग्निसांनिध्ये स्नाता स्नाते ह्यरोगिणी । दास्येऽहंतुभ्यमात्मानं भोगार्थं स्वर्गसिद्धये ॥ इति मन्त्रेण ॥

**वृतोऽसीति** । तस्मै स्वयं फलपुष्पादिकं दत्वा पतिं वृणुयात् । ब्राह्मणद्वारा वरणे तु—आत्मानं दास्यते सेति भोगार्थं स्वर्गसिद्धये । इति मन्त्रेण फलपुष्पादिना वृतोऽसीति तयेति फलपुष्पादिकं दत्वा ब्राह्मणद्वारा पतिं वृणुयात् । ततो वृतोऽस्मीत्युक्त्वा फलपुष्पादिकमादाय पुष्पाणि शिरस्याधाय फलं भक्षयेत् । अथ कस्मिंश्चित्पर्वणि अन्यस्मिन्वा शुभदिने गोमयाद्युपलिप्तभूमिविशेषे स्नातं वरं समुपवेश्य स्वयमपि स्नात्वा नवीनवासांसि परिधाय भूषणालङ्कारादिनात्मानमलङ्कृत्वा तत्समीपे समुपविश्य आचान्ता सा पतिम्वरा दक्षहस्तेन जलगन्धपुष्पैरपवित्रः पवित्रो वेत्यादिनात्मानं प्रसिञ्च्य वरपतिम्वरयोर्मङ्गलार्थं ब्राह्मणस्तावद्गणपतिं षोडशमातृकानवग्रहसहितं विधाय भगवन् गणपतिरसीति गणराजं प्रतिष्ठाप्य कलशञ्च संस्थाप्य स्वस्त्ययनं कुर्यात् । ततो जलाक्षतादिकमादाय पतिम्वरा अद्यतत्सादित्यादि सङ्कल्पं विधायात्मनः पूर्वकं गोत्रं समुच्चार्य्याऽमुकगोत्राऽमुकदेवी स्ववरणीयपतिसमन्विताया मम सर्वदुःखशोकप्रध्वंसपूर्वकैहिकामुष्मिकसर्वाभीष्टसाधनाय स्वशरीरप्रदानमहं करिष्ये । इति प्रतिज्ञाय पुनर्जलादिकमादाय अद्य तत्सदिति पठित्वा अमुकगोत्राऽमुकदेवी स्ववरणीयपतिसमन्विताया मम समस्तदुःखशोकप्रत्यूहसमुदायप्रध्वंसपूर्वकसर्वाभीष्टसंसाधनाय कर्तव्यस्वप्रदाननिर्विघ्नसमाप्तिहेतवे गणपतिप्रभृतिमातृनवग्रहपूजनमहं करिष्ये इति पठित्वोत्सृजेत् । अथ गणानां त्वेति मन्त्रेण गणपतिमक्षतैः प्रतिष्ठाप्य ॐ आवाहयाम्यहं देवं

गणेशं शिवनन्दनम् । इत्यादिना आवाह्य आसनपाद्यार्घाचमनस्नानवस्त्र-कौसुंभसूत्रगन्धपुष्पधूपदीपनैवेद्यदक्षिणान्तं सम्पूज्य ॐ सुमुखश्चैकद-न्तश्चेत्यादि पठित्वा प्रणमेत् । अथवा ब्राह्मणद्वारा उभयो रक्षाविधानम् । ततो गौरी पद्मा शची मेधा सावित्री विजया जया । इत्यादिना अक्षतैर्मातृः प्रतिष्ठाप्य आवाहनादिषोडशोपचारैः सम्पूज्य माया कुण्ड-लिनीत्यादिपठित्वा प्रणमेत् । अथ आकृष्णेन रजसेत्यादिनवभिः ऋ-ग्भिरक्षतैर्नवग्रहान प्रतिष्ठाप्य तथैव ब्रह्मजज्ञानमित्यादिमन्त्रैस्त्रिभिरक्षतैरेव ब्रह्मविष्णुरुद्रानपि प्रतिष्ठाप्य आवाहनादिषोडशोपचारैः सम्पूज्य हस्तौ समानीय ॐ ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकरा भवन्तु । इति पठि-त्वा प्रणमेत् । अथ कलशं स्वपिधानेन पिहितं पूर्वस्थापितं चतुर्दिशि-कृततिलकं कौसुंभसूत्रबद्धमङ्गलं पञ्चरत्नसमन्वितं गले कृताश्वत्थशमी-पत्रं दधि हरिद्रामङ्गलबिंदुभिरञ्चितं सव्यहस्तधृताक्षतेभ्यः दक्षहस्तेन अक्षतानादाय ॐ ऋग्वेदाय नमः यजुर्वेदाय नमः सामवेदाय नमः अथर्ववेदाय नमः कलशाय नमः कलशकुम्भाय नमः रुद्राय नमः स-मुद्राय नमः तैरक्षतप्रक्षेपैरेव एभिर्मन्त्रैः सम्पूज्य हस्तौ समानीय संप्रार्थये-त् । देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ वि-धृतो विष्णुना स्वयम् ॥१॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥२॥ शिवः स्वयं त्वमेवा-सि त्वं विष्णुस्त्वं प्रजापतिः । आदित्या वसवो रुद्रा विश्वे देवाः सपैतृ-काः । त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥३॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥४॥ ब्रह्म-णा निर्मितस्त्वं हि मन्त्रैश्चैवामृतोपमैः । प्रार्थयामि च त्वां कुम्भ वाञ्छितार्थं प्रयच्छ मे ॥५॥ इति सम्प्रार्थ्य षोडषोपचारैः सम्पूजयेत् । एवं पतिम्वरा देवान्

गणेशादीन् सम्पूजयेत् । अथ वरो विघ्नध्वंसपूर्वकं स्वस्य मङ्गलादिप्राप्तये सकलजगज्जगत्कार्यसंसारधनाय च गणेशादीन् सम्पूजयेत् । तेनैवोक्तविधिना तत्र प्रतिज्ञासङ्कल्पस्तु विशेषः । ॐ अद्य तत्सदित्यादि कालज्ञानं कृत्वा अमुकगोत्रोऽमुकशर्मापरपूर्वभार्याङ्गसङ्गजपापाभावपूर्वकस्वर्गजनकधर्माऽविरुद्ध-भोगसुखावाप्तये शास्त्रविधिना पूनर्भूस्वीकरणमहं करिष्ये । पुनः अद्य तत्सत् अमुकगोत्रोऽमुकशर्मा परपूर्वभार्याङ्गसङ्गजपापाभावपूर्वकस्व-र्गजनकधर्माविरुद्धभोगसुखावाप्तये शास्त्रविधिना पुनर्भूस्वीकरणनिर्विघ्न-समाप्तये गणेशमातृकानवग्रहकुम्भपूजनमहं करिष्ये । इति प्रतिज्ञासङ्क-ल्पवाक्यं विधाय पूर्वोक्तविधिना गणेशादीन सम्पूज्ययेत् । एवमुभयत्र सम्पूजने कृते अथ पतिम्वरा वरस्य चरणौ प्रक्षाल्य प्राङ्मुखी वराभिमुखी वा भूत्वा हस्तौ समानीय त्वं विष्णुः कमलाकान्तः साक्षादव्यय ईश्वरः । तुभ्यमात्मप्रदानेनाऽऽवां भवेतामपापिनौ ॥१॥ धर्मः सत्यं तपः सत्यं सत्यं शास्त्रं शिवाज्ञया । तेन सत्येन देवेश न भवेत्पापमावयोः ॥२॥ इति सम्प्रार्थ्य वरसंवरणसामुग्री मङ्गलसूत्रगन्धपुष्पस्रक्पौरुषेयसमस्तवस्त्राणि न्यूना-धिकवस्त्राणि वा यज्ञोपवीताक्षतकमंडलुपानपात्रपुरुपभूषणानि कर्ण-कुण्डलकण्ठसूत्राङ्गदकङ्कणमुद्रिकामुद्रा गृहीत्वा ताम्रपात्रेण जलं दक्षि-णहस्तेनादाय वामहस्ते सामुग्रीं निधाय ॐ अद्यतत्सादित्यादिकालज्ञानं कृत्वाऽमुकगोत्रामुकदेवी स्वस्य कायिकवाचिकमानसिकजनितजन्यज-निष्यमाणसकलदुरितसमुदायविनाशपूर्वकश्रुतिस्मृतिपुराणोक्तपुण्यफलाक्षयब्र-ह्मलोकादिकसुखाप्तिकामशास्त्रोक्तविधिना आत्मसम्प्रदानार्थमनया वरण-सामग्र्याऽमुकगोत्रममुकशर्माणं वरमहं वृणे । वृतोऽस्मीति प्रतिवचनं । ततो मङ्गलसूत्रेण वरं करे बद्ध्वा गन्धं ललाटे तस्य कृत्वा पुष्पमालां गले परिधाय यज्ञोपवीतं दत्वा भूषणानि वस्त्राणि च भूषयित्वा वास-यित्वा च नमस्कुर्यात् । ततो वरस्य दक्षिणाङ्गुष्ठं प्रक्षाल्याचामेत । आचम्य

हस्तौ समानीय अद्यप्रभृति तव दासी भवामीति ब्रूयात् । अथ सा पतिम्वरा वामहस्तेन सव्यस्तनं गृहीत्वा अथ वामकरं स्वहृदये न्यस्य दक्षिणहस्तेन जलगन्धाक्षतानि गृहीत्वा ॐम् अद्य तत्सत् । जंबूद्वीपे भारत-खण्डे कलियुगे वर्तमाने आर्यावर्ते पुण्यबृहस्पतिक्षेत्रेऽमुकायनगते सूर्येऽमु-कर्तावमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकयोगमुहूर्तवर्तमानेऽमुकगोत्रा-मुकदेवी योषिज्जन्मनि बालविधवात्वप्रदायकमेरुमन्दराचलप्रतिनिध्य-नेकजन्मार्जितदुरितपङ्कनिवृत्तिपूर्वकस्वधवसंयुताक्षयब्रह्मलोकानन्दभोगोत्तरम-मरावतीभोगोत्तरमकण्टकपृथिवीराज्यभोगावसानेलब्धब्रह्माद्वयज्ञानतो निरति-शयानन्दरूपमुक्तिलब्धये इमंपाञ्चभौतिकं स्वीयं कलेवरमभयदैवतकं त्वदुपभोगार्थममुकगोत्राय वरायामुकशर्मणे तुभ्यमहं सम्प्रददे । ॐ स्वस्तीति प्रतिवचनम् । ततो दक्षिणाद्रव्यमादाय ॐम् अद्य तत्सत् कृतैतत्सकलदुरितक्षयपूर्वकसमस्तभोगावाप्तिपरिणाममुक्तिसुखावाप्तिहेतवे स्वयं दत्तात्मशरीरदानप्रतिष्ठार्थं सुवर्णमग्निदैवतकं रजतं वा चन्द्रदैवतकं ताम्रं वा अर्कदैवतकं फलं वा वनस्पतिदैवतकं अमुकगोत्रायामुकशर्मणे वराय दक्षिणां तुभ्यमहं सम्प्रददे । ततः प्रतिग्रहीता तस्याः स्तनं हृदयं दक्षिणहस्ते स्पृशेत् । ततो वरस्तत्रैव स्थानेऽन्यस्मिन्वा स्थाने तद्दिने दिनान्तरे वा कुण्डे स्थण्डिले वा पञ्च भूसंस्कारान् कृत्वा-ऽग्निं संस्थाप्य जलपात्रं किञ्चिन्निधाय समिद्धतमेऽग्नौ आज्याहुतिं कुर्य्यात् ॐ प्रजापतये स्वाहा इदं प्रजापतये ॐ अग्नये स्वाहा इदमग्नये ॐ इन्द्राय स्वाहा इदमिन्द्राय ॐ सोमाय स्वाहा इदं सोमाय । अथ व्याहृतिहोमः । ॐ भूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐ स्वः स्वाहा इदं स्वः । एता महाव्याहृतयः ॐ त्वन्नोऽग्ने इत्यादिमन्त्रैः पञ्चाहुतयः । एष होमो द्विजानामेव न तु शूद्राणां व्याहृत्यादिहोमः ।

ततो नमो भगवते वासुदेवाय स्वाहा इदं भगवते ॐ विष्णवे स्वाहा इदं विष्णवे ॐ नृसिंहाय स्वाहा इदं नृसिंहाय ॐ नारायणाय स्वाहा इदं नारायणाय ॐ अच्युताय स्वाहा इदमच्युताय ॐ भौमाय स्वाहा इदं भौमाय इति विष्णुहोमः । ततो दशदिक्पालहोमः । ततो नवग्रहहोमः स्वस्वनामभिश्चतुर्थ्यन्तैः स्वाहान्तैर्होमः इदमिति प्रक्षेपः । ततोऽग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते इति स्विष्टकृद्धोमः । अथ पूर्णाहुतिं कुर्य्यात् ॐ मूर्द्धानमिति मन्त्रेण । तत उपविश्य त्र्यायुषं कुर्य्यात् आत्मानं पतिंवरां च । ततः पतिंवरायै वरो योषितं परिधानवस्त्रं परिधापयित्वा कञ्चुकीञ्च परिधापयेत् । उत्तरीयं सदशं च परिधापयित्वा भूषणैर्भूषयित्वा च कुंकुमरञ्जितं कार्पासमुत्तरीयं यदि वा चतुःकोणं चतुर्दिशं मध्यभागे इति नवस्थानतो रञ्जितमुत्तरीयं अन्यन्मनोरमं वा पट्टवस्त्रं पीतकौशेयं वा वरो गृहीत्वा । शरीरावरकं वासो लज्जायाः करणं परम् । लज्जायास्ते सुखायाहं क्षिपाम्येतत् तवोपरि ॥१॥ इति मन्त्रेण पतिम्वरोपरि विस्तार्य क्षिपेत् । पतिम्वरा च तद्वस्त्रेण सर्वाण्यङ्गान्याच्छादयित्वाऽग्निं प्रणमेत् । ततः कलशं प्रणमेत् । ततो वरं प्रणमेत् । दिवा सूर्य्यं प्रणमेत् । रात्रौ ध्रुवमरुन्धतीञ्च प्रणमेत् । एवं प्रणम्य वरेण सह पतिम्वरा अग्निं सप्तवाराणि प्रदक्षिणीकृत्य यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥१॥ इति मन्त्रेण वरमग्रे कृत्वा ग्रन्थिबन्धनं विधायाभिः सप्त प्रदक्षिणा विहिताः । तत उपविश्य संश्रवं प्राश्य आचम्य विवाहकारकाय ब्राह्मणाय पुरोधसे च यथाशक्तिसङ्कल्पं कृत्वा दक्षिणां दद्यात् । अथ किञ्चिद्भक्ष्यद्रव्यमादाय वरो ग्रासान्प्रतिमन्त्रान्ते पतिम्वरायै भोजयेत् । अथ मन्त्राः । प्राणैस्ते प्राणान् सन्दधामि १ अस्थिभिरस्थीनि सन्दधामि २ त्वचा ते त्वचं सन्दधामि ३

ततो वेदिकाया तुषकेशशर्कराभस्मादिरहितां चतु-
रस्रां भूमिं कुशैः परिसमूह्य तानैशान्यां परि-
त्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवेण वा
प्रागग्रप्रादेशमितमुत्तरोत्तरक्रमेण त्रिरुल्लिख्योल्ले-
खनक्रमेणाऽनामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेना-

मांसैस्ते मांसान् सन्दधामि ४ । मम वाचमेकमना जुषस्व ५ । ॐ सर्व-
भूताधिवासः श्रीविष्णुरीशः सनातनः । सन्तुष्टोऽनेन यागेन सिन्धौ पापमु-
पाक्षिपेत् ॥१॥ इति सम्प्रार्थ्य भगवन्नावयोरङ्गसङ्गजन्यं पापं क्षाराम्बुधौ प्रक्षिप्य
संसारादुत्तारयेत्युक्त्वा नमेत् । ब्राह्मणेभ्य आशीर्वचनपूर्वकं प्रसादमादाय
यथासुखं विहरेत् । इति पुनर्भूविधानं प्रासङ्गिकमभिधायेदानीं प्रस्तुतम-
नुसरामः ।

तत इति । ततो गोरुत्सर्गानन्तरं पूर्वञ्च यथाविधिनिरूपितायां
वेदिकायां तुषकेशशर्कराभस्मादिरहितां चतुरस्रां चतुष्कोणान्वितचतुर-
स्राकारां भूमिं कुशैः परिसमूह्य परिसमूहनं कृत्वा तान्कुशानैशान्यां
परित्यज्य गोमयोदकेनोपलिप्य । अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः ।
रोगार्त्तनवसूताया न गोमयमुपाहरेत् ॥१॥ जलाशयादन्त्यजाद्यैः कारि-
तादस्थिचर्मभिः । कृमिकीटादिभिर्दुष्टान्नैवोदकमुपाहरेत् ॥२॥ कृमिहीनं
सुवर्णस्थं मलमूत्राद्यदूषितम् । सुस्वादु शुद्धसंस्थानादुदकन्तु समाहरेत् ॥३॥
इति । कूपात् प्रस्रवणात् खातात् सरसो देवप्रग्रहात् । नद्यादिसङ्गमात्ती-
र्थादुदकं समुपाहरेत् ॥१॥ इति धर्म्मशास्त्रोक्तशुचिगोमयोदकाभ्यां उपलेपनं
विधाय । स्फ्येन स्रुवेण वा प्रागग्र्यप्रदेशमितं प्रागग्राश्च प्रादेशप्रमाणाश्च
यथा स्यात्तथा पश्चिमतः आरभ्योर्द्ध्वनिष्क्रान्ताः प्रागग्राः वितस्तिपरिमाणाः
प्रादेशमिताः एतावन्मात्रं यथा स्यात्तथा उत्तरोत्तरक्रमेण दक्षिणत आर-
भ्योत्तरतस्त्रिरुल्लिख्य तिस्रो रेखा विधाय उल्लेखनक्रमेण दक्षिणत उत्तरो-

**भ्युक्ष्य तत्र तूष्णीं कांस्यपात्रस्थं पिहितं वह्निं प्राङ्मुखः प्रत्यङ्मुखमुपसमाधाय तद्रक्षार्थं कञ्चि-न्नियुज्य कौतुकागाराद्वरः कन्यामानीय मण्डप उपवेश्य अथैनां वासः परिधापयति ।** ॐ जरां गच्छेति म-न्त्रस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दस्तन्तवो देवता वस्त्रपरिधाने विनियोगः ॥

त्तर इत्यर्थात् अनामिकाङ्गुष्ठाभ्यां रेखातो मृदमुद्धृत्य जलेनाभ्युक्ष्य सिक्त्वा जलं गृहीत्वा पादावभिषिञ्चेत् । तत्र तद्देशे तूष्णीं न केनाऽपि मन्त्रेणेत्यर्थः । कांस्यपात्रस्थमपरपात्रेण पिहितं वह्निं लौकिकं निर्मथितं वा प्रत्यङ्मुखं स्थापकः स्वयं प्राङ्मुखः प्रत्यङ्मुखं यस्मिन्पात्रे स्थितो वह्निस्तत्पात्रं स्वाभिमुखं कृत्वा उपसमाधाय स्थापहित्वा तद्रक्षणार्थं वह्नि-रक्षणाय कञ्चिन्नियुज्य कस्मैचिद्दृत्विजे आदेशं कृत्वा यथाग्नि नोपशमे-दिति विधेयमित्यादिश्येत्यर्थः । वरः कौतुकागारान्मण्डपे कन्यामानीय वक्ष्यमाणमन्त्राभ्यां वाससी परिधापयतीत्यर्थः । अथैनामिति अथाऽग्नि-स्थापनानन्तरं एनां कुमारीं वासः अहतं सदशं वस्त्रं परिधापयति परि-हितं कारयति वरः जरां गच्छेति मन्त्रं पठित्वा । कुमारी च स्वयं परि-धत्ते तदनुसरणेनेति सदशं नूतनं वस्त्रं मञ्जिष्ठादिसुरञ्जितम् । अहतं तद्वि-जानीयादित्युक्तं पूर्वसूरिभिः ॥१॥ इति वासोलक्षणेन शुभं वस्त्रं ज्ञायते “ ईष-द्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात्सर्वकर्म्मसु पाव-नम् ॥१॥” इति ब्रह्मपुराणीयवचनात् । चैलवस्त्रं ज्ञायते ईषद्धौतं अरजकादि-धौतामिति । अथ मन्त्रार्थः । हे आयुष्मति सम्पूर्णायुःसम्पन्ने त्वं जरां निर्दुष्टं वृद्धत्वं मया सह गच्छ प्राप्नुहि चिरकालजीविनी • भवेत्यर्थः । किञ्च वासो मया सम्पादितं वस्त्रं परिधत्स्व परिधेहि वस्त्रायुक्ता मा कदाचिदपि भवे-

**ॐ जरागच्छपरिधत्स्ववासो भवाकृष्टीनामभिशस्तपावा शतञ्च जीव शरदः सुवर्चा रयिञ्च पुत्राननुसंव्ययस्वाऽऽयुष्मतीदं परिधत्स्व वासः इति मन्त्रेण परिधानवस्त्रं परिधापयेद्वरः ॥**

**अथोत्तरीयं वासः समादाय वरोऽग्रिममन्त्रेण परिधा-**

त्यर्थः । अकृष्टीनामिति प्रथमार्थे षष्ठी । किञ्च त्वं आकृष्टी भव मनोहरा भवेत्यर्थः । आकृष्यते मनो लोचनानि अनयेत्याकृष्टी "आकृष्टी स्यान्मनोहरा" इति कोशोक्तिः ; किञ्च अभिशस्तपावा भव अभिशस्तमभिशापः 'शंस प्रमादे' इत्यस्य धातोरभिशस्तेति रूपम् । अभिशस्तेः अभिशापात्पातीति अभिशस्तपावा भव सात्विकस्वभावात्सौम्यत्वेन प्रसिद्धस्य शमोपेतस्यास्मत्कुलस्य कस्मिंश्चित्कर्म्मणि कयाचिदपि केनचिदपि कलहकरणेनोपालम्भकारयित्री मा भवेत्यर्थः । बालस्वभावेनागतक्रूरत्वं विहाय अतिसङ्कुचितेन्द्रियकश्वशुरगृहानिवासव्यवहारविधानेन सौम्यस्वभावा भवेत्यर्थः । यद्वा अभिशस्तं प्रमादः तस्मात्पावा रहिता भव । प्रमादतां विहाय गृहकर्म्मादौ प्रयता भवेत्यर्थः । किञ्च आकृष्टीनामित्यत्रधारणे षष्ठी नतु प्रथमार्थे । तदा च आकर्षन्ते कामादिभिर्नरान् इति आकृष्ट्यो नार्य्यः तासां मध्ये त्वमभिशस्तपावा भवेत्येवमन्वयः । शरदः शतं पूर्णायुर्वर्षाणि जीवस्व प्राणधारणयाऽधिक्रियाव्यापारवती भव सुवर्चाः किञ्च पातिव्रत्यतेजोभिः शोभनदीप्तियुक्ता भूत्वा रयिं धनं पुत्रांश्च अनुसंव्ययस्व संवृणु धारयस्व उत्पाद्यराशीकुर्वित्यभिप्रायः । इदं वेदिकायां मया दत्तं वासः परिधत्स्व परिधेहीत्यर्थः । अत्र प्रथमं यत्परिधत्स्व वास इति तन्मा कदाचिदपि वस्त्रवियुक्ता भवेत्याशंसायां वाक्यं अन्ते च यत् इदं परिधत्स्व वास इति तत्प्रेरणे अतो न पुनरुक्तिदोष इति भावः ।

**अथोत्तरीयमिति** । अथ वस्त्रपरिधानानन्तरं उत्तरीयं वासः परिधापयति

**पयेत् ।** या आकृतन्नित्यादि मन्त्रस्य प्रजापतिर्ऋषिर्जगती छन्दो विधात्र्यो देवता वस्त्रधारणे विनियोगः । **ॐ या आकृतन्नवयन् या अतन्वत याश्च देव्यस्तन्तूनभितस्ततंथ तास्ता देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः॥**

वरः या आकृतन्निति मन्त्रेण । अत्र परिधापयतीति णिजन्तस्य कारितार्थत्वात् परिधत्स्व वास इति मन्त्रस्यापि तदर्थत्वात् परिधापयितान्य इत्यवगम्यते । स किं वरः अध्वर्युर्वा इति संशयः । तत्राध्वर्युः कर्मसु वेदयोगादिति परिभाषाबलात् अध्वर्युः परिधापयतीति चेत् तन्न । स्मार्तेषु कर्मसु अध्वर्योः कर्तृत्वयोगाभावात् । समाख्यया हि अध्वर्योः कर्मसु योगः समाख्यो वेदयोगात् । न च स्मृतिर्वेदः स्मरणादेव स्मृतीनां प्रामाण्यं न पुनर्वेदमूलत्वेन अतः समाख्याया अभावात् स्वयं पाकयज्ञेषु अतो वर एव परिधापयिता । ननु पूर्णपात्रो दक्षिणावरेणेति पाकयज्ञेषु परिक्रयार्था दक्षिणा श्रूयते सा च दक्षिणा परिक्रेतव्याऽभावेनोपपद्यते अतस्तदन्यथाऽनुपपत्त्याऽन्यस्य कर्तृत्वं कल्प्यताम् । नैतदेवम् अन्यस्य कृताऽकृतावेक्षणरूपस्य ब्रह्मकर्मपरिक्रेतव्यस्य कर्तुर्विद्यमानत्वात् परिक्रयार्थदक्षिणाश्रवणस्योपपत्तेः । किञ्च वचनाऽभावे परः परस्य कर्म कर्तुं न प्रभवतीति । यतोऽत्र पाकयज्ञेषु स्वतोऽन्यकर्तृत्वविधायकं न वचनमस्ति अतो नान्यस्य कर्तृत्वकल्पनेत्यर्थः । श्रौतवत्समाख्याऽपि नास्ति । ननु स्मृतीनां वेदमूलत्वात् यद्वेदमूलं स्मार्तं कर्म तद्वेदसमाख्ययाऽन्यस्य कर्तृत्वं कल्प्यताम् । यतः स्मृतयोऽप्यनिश्चितवेदमूला एव अतो न विज्ञायते किं वेदमूलमिदं कर्म यद्वेदसमाख्या अन्यस्य कर्तृत्वं कल्प्येत । किञ्च परकर्तृत्वे मन्त्रलिङ्गविरोधोऽपि स एव

**इति मंत्रेण अहतवासो धौतं वा मौत्रेणाच्छादयीते- ति श्रुत्यनुसारेण वरोऽप्येतादृशे वाससी अत्र परि- धत्ते परिधास्यै इत्यादिमन्त्राभ्यां** परिधास्यै इत्यादिमन्त्र- स्याथर्वण ऋषिस्त्रिष्टुप् छन्दः तन्तवो देवता वासःपरिधाने वि- नियोगः । **ॐ परिधास्यै यशोधास्यै दीर्घायुष्ट्वाय ज- रदष्टिरस्मि शतञ्च जीवामि शरदः पुरूची राय-**

निरूपयति मामनुव्रता भव प्रजापतिष्ट्वा नियुनक्तु मह्यं अमोहमस्मि इत्यादि सा नः पूषा शिवतमेत्यादयो वैवाहिका मन्त्रा आत्मलिङ्गाः ते च परकर्तृत्वे विरुध्यन्ते । तस्मात् पाकयज्ञेषु स्वस्यैव कर्तृत्व- मिति सिद्धम् । अथोत्तरीयं वासो या आकृतन्नित्यादिमन्त्रेण परिधापय- तीत्यनुवर्तते । अथ मन्त्रार्थः । देवीरिति प्रथमार्थे द्वितीया । या देवीर्देव्यः इदं वास आकृतन कर्तितवत्यः । "कृती कर्तने" या देव्योऽवयन वीतवत्यः "व्येञ् तन्तुसन्ताने" तन्तुसन्तानं कृतवत्यः मध्यमप्रतिबन्धेन पृथक् २ स्थापितानपि एकत्रीकुर्वन्त्यः यास्तन्तून् सूत्राणि अतन्वन् तिर्य्यक् कृत्वा विस्तारितवत्यः ओतवत्य इत्यर्थः । चकारात् या देव्यः तंतून अभितः उभयोः पार्श्वयोरपि ततंथ तेनुः तुरीवेमादिव्यापारेण ग्रथितवत्यः प्रोतवत्य इत्यर्थः । तास्तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यं रूपवदिदं वासः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययन्त्व परिधापयन्ति पुरुषादिव्यत्ययः छान्दसः अतो हे आयुष्मति इदं एतादृशं वासः परिधत्स्व उत्तरीयत्वेन वृणु । अत्र वरोऽपि परिधास्यै इति यशसामेति मन्त्राभ्यां वाससी परिधत्ते अहतं नवीनं सदृशं अनुपहितं । ननु अधौतवस्त्रो यः कुर्यान्नित्यनैमित्तिकीं क्रियाम् । न क्रियाफलमाप्नोति वृथा तस्य परिश्रमः । इति वचनात्कथ- मधौतं धारयेत्तत्राह अमौत्रेण धौतं वा परिदध्यात् । मौत्रो रजकस्तद्भिन्न-

**स्पोषमभिसंव्ययिष्ये इति पठित्वा वरः परिधत्ते । अथोत्तरीयं आच्छादयतीति सूत्रम् ।** ॐ यशसामेत्यादि मन्त्रस्य प्रजापतिर्ऋषिर्जगती छन्दो विधात्र्यो देवता वासोधारणे विनियोगः । **ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशो भगश्च माविदद्यशो मा प्रतिपद्यतामिति पठित्वोत्तरीयं परिधत्ते ।**

तिरिक्तेन धौतं वास आच्छादयीत । अथ मन्त्रार्थः हे वासोदेवते परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै कीर्त्याधानाय तथा दीर्घायुत्वाय निर्दुष्टचिरजीवनाय च इदं वासः संव्ययिष्ये परिधास्ये किम्भूतोऽहं वासोदेवतानुग्रहेण जरदष्टिरायुःपरिपाकवान् पुनः किम्भूतोऽहं पुरूची पुरुभिर्बहुभिः पुत्रधनादिभिः उचः संयोगोऽस्ति यस्य सः पुरूची । "उच समवाये" इत्यस्य धातो रूपं प्रथमैकवचनम् । किम्भूतं वासः रायस्पोषं रायो धनादिसमृद्धिः तस्य पोषं पुष्टिकरमित्यर्थः । किञ्चैतत्सम्बन्धेनाहं शरदः शतं वर्षाणि जीवामीत्यर्थः । इति पठित्वा वरः परिधत्ते । अथोत्तरीयमिति उत्तरीयं वासः आच्छादयीतेत्यनुषङ्गः यशसामेति मन्त्रेण । मन्त्रार्थः हे वासोदेवते द्यावापृथिवी द्यावाभूमी यशसायुक्ते मा मां अविन्दत् अविन्दतां व्याप्नुतामिति यावत् । "विदॢलाभे" इत्यस्य रूपम् । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मा अविदन् अविन्दतामिति पूर्ववत् । तथा च भगः सूर्योऽपि यशसा युक्तो माविन्दत् अविन्दतामिति पूर्ववत् । तच्चैतैः सम्पादितं यशो मा मां प्रतिपद्यतां मां प्राप्नुयात् मयि सर्वदा तिष्ठत्विति तात्पर्यम् । यद्वा तद्यशो मा प्रति-

**ततः कन्याया वरस्य च द्विराचमनम् । ततः क-न्याप्रदेन परस्परं समंजेथामिति प्रेषितयोः परस्प-रं सम्मुखीकरणम् ।** समंजन्त्विति मन्त्रस्याऽथर्वण ऋषिरनु-ष्टुप् छन्दो विश्वेदेवा देवता मैत्रीकरणे विनियोगः । **ॐ स-मंजन्तु विश्वे देवाः समापो हृदयानि नौ संमातरि-**

पद्यतां मेति निषेधार्थेऽव्ययम् । प्रतिरित्युपसर्गस्तु अपोपसर्गार्थे तथा सति तद्यशो मत्तो मापयातु इत्यर्थः मत्त इति पदस्याध्याहारः । वस्त्रद्वयाभावे एकमेव वासश्चेत् तदाऽपि परिधानमन्त्रं पठित्वा वस्त्रार्द्धं परिधायाच-म्य उत्तरार्द्धं गृहीत्वा उत्तरीयमन्त्रं पठित्वोत्तरीयं स्कन्धे निधायाचामे-त् । इति द्विराचमनस्योभयथा प्राप्तिरित्यभ्यधिको भेद इति । किञ्चैत-न्मन्त्रद्वयं स्वकर्तृकपरिधाने बोद्धव्यं । परकर्तृकपरिधाने तु येनेशयेति म-न्त्रान्तरमित्यविरोधः । अथैनौ वधूवरौ कन्यापिता समञ्जयति परस्परं स-म्मुखीकरोति । समंजन्तु विश्वेदेवा इति मन्त्रेण । समञ्जनञ्च युवां परस्परं समंजेथामिति प्रेषितयोः परस्परं सम्मुखीकरणम् । तथा च वासांसि परिधायैतावाचान्तौ यदि तिष्ठतः । सम्मुखीकरणं कुर्यात्तयोस्तु दुहितुः पिता ॥१॥ इति । तथा च सुमन्तुरपि । पिता तु प्रेषणेनैव सम्मुखीकरणञ्चरेत् । मन्त्रलिङ्गात्तु मन्त्रस्तु पठनीयो वरेण च ॥१॥ इति सत्यपि कारितत्वे वरस्यैव मन्त्रपाठो मन्त्रलिङ्गात् । कारितत्वञ्च सान्निधानात्कन्यापितुरेव सन्निहि-तत्वं ह्यस्य तु प्रदातृत्वात् । मन्त्रपाठोऽपि कन्यासम्मुखमेव । अथ मन्त्रार्थः । हे कन्ये विश्वेदेवाः समस्ता देवताः तथा समापः शुद्धा आपो नौ आवयोर्हृदयानि मनांसि तद्धर्मान् संकल्पादीन्वा समंजन्तु गुणा-तिशयाधानेन संस्कुर्वन्तु । तथा संमातरिश्वा अनुकूलो वायुः तथा संधाता अनुकूलः प्रजापतिः । सम् इति अप्यर्थे देष्ट्री उपदेशकर्त्री

श्वा संधाता समुदेष्ट्री दधातु नौ इति वरः पठेत् । ततः कन्याप्रदकर्तृकं ग्रन्थिबन्धनम् ॥ अथ कन्या-दानम् । दाता शङ्खस्थदूर्वाक्षतफलपुष्पचन्दनजला-न्यादाय अथ कन्याप्रदः जामातृदक्षिणकरोपरि

देवता सावित्री अपि धर्मार्थकाममोक्षेषु धियो यो नः प्रचोदयात् इति श्रुत्या धर्माद्युपदेशकर्त्री गायत्रीमन्त्राधिदेवता अपि नौ हृदयानि दधातु धर्मार्थकाममोक्षेषु सुस्थितानि करोतु । तथा च याज्ञवल्क्यः । या योजयति भूतानां बुद्धिवृत्तिं पुनः पुनः । धर्मार्थकाममोक्षेषु तस्यै सावि-त्रि ते नमः ॥१॥ इति स्मृतिवचनादपि धर्माद्युपदेष्ट्री सावित्री एव नान्या इति । ननु वरवाक्ये कन्ये इति सम्बोधनमनुचितं तत्राह । एतावत्का-लपर्यन्तमेव तु कन्याशब्दप्रवृत्तिः एतदनन्तरं वधूशब्दप्रवृत्तिर्भविष्यति इति । संसाधनायैव सम्बोधनदानम् । अर्थात् एतावत्पर्यन्तं ममाऽपि न-त्वमिति इतरलोकवत् ममापि कन्याकथने न दोषः । यतो वाग्दानेन न क-न्यात्वं निवर्तते "वरदानोचिता कन्या" इति कन्यालक्षणानिवृत्तेः पूर्ववरस्य व्यङ्गत्वसम्भवेऽन्यवरदानोचितत्वस्य लक्षणस्य विद्यमानत्वात् । तथा चोक्तम् । आप्रदानाद्भवेत्कन्या चाऽभिषेकाद्वधूः स्मृता । सुमङ्गल्याचतुर्थ्यां तु यथात्रेर्वचनन्तथा ॥१॥ अभिषेकानन्तरं सुमङ्गली वधूशब्दप्रवृत्तिः । तथा च नारदः । दशवर्षा भवेत्कन्या सम्प्रदाने वधूर्भवेत् । साङ्गुष्ठग्रहणे भार्या पत्नी चातुर्थकर्म्माणि ॥१॥ एतच्छब्दप्रवृत्तिप्रयोजनमाह कन्यादर्शनमात्रं स्याद्वरस्य वचनं नहि । वध्वा दर्शनसंस्पर्शभाषणं मुनिभिः स्मृतम् ॥१॥ वामभागे स्थितिः प्रोक्ता भार्याया धर्मकर्मसु । सर्वं भोगविलासादि पत्न्या सह समाचरेत् इति ॥२॥ ततः कन्याप्रदेति । ततः कन्यावरयोः सम्मु-खीकरणानन्तरं कन्याप्रदकर्तृकं ग्रन्थिबन्धनम् । कन्याप्रदः कन्याप्र-

## कन्यादक्षिणकरं निधाय दाताहं वरुणो राजा द्रव्यमादित्यदैवतं विप्रोऽसौ विष्णुरूपेण

दाता कर्ता यस्य तत् ग्रन्थिबन्धनं द्रव्यपुष्पफलाक्षतादि कन्यावाससि निक्षिप्य ग्रन्थिं बद्धा वरवस्त्रेण कन्याप्रदो ग्रन्थिबन्धनं कुर्य्यादित्यर्थः । तथा च योगियाज्ञवल्क्यः । कन्यकासु दशे पार्श्वे द्रव्यपुष्पाक्षतानि च । निक्षिप्य तानि संबद्धा वरवस्त्रेण संयुजेत् ॥१॥ वस्त्रैः संयोज्य तौ पूर्वं कन्यादानं समाचरेत् । दानेन युक्तयोः पश्चाद्विदध्यात्पाणिपीडनम् ॥२॥ इति । अथ कन्यादानम् । अथ ग्रन्थिबन्धनानन्तरं कन्यादानं तत्र विधिः । दाता शङ्खस्थेत्यादि प्रगृह्यात्वयं विधिरिति दाता पठेदित्यन्तं मूलकारेणैव दर्शितः स तु सुगम एवेति । तत्र प्रमाणानि । तथा च बृहत्पाराशरः । कन्यादानसमारम्भे दाता शङ्खं समाददेत् । दूर्वाक्षतफलं पुष्पं चन्दनं जलमेव च ॥१॥ जामातृदक्षिणकरोपरि कन्यादक्षिणकरं निधाय कृत्वा दाताहमित्यादिवाक्यं दाता पठेत् । कन्यादानं ततः कुर्य्याद्यथोक्तं प्रब्रुवन्वच इति । वचः सङ्कल्पवाक्यं इति । सङ्कल्पवाक्येऽपि विशेषमाह ऋष्यशृङ्गः । अद्येत्यादि यथाकालज्ञानं कृत्वा तु दैशिकम् । सप्तम्यन्तन्तु षष्ठ्यन्तं गोत्रं प्रवरमेव च ॥१॥ वेदादिवत्समुच्चार्य्य प्रपितामहपूर्वकम् । संज्ञाऽभिधानं चार्थस्य चतुर्थ्यन्तं वरन्तथा ॥२॥ द्वितीयान्तन्तु कन्याया नाम सङ्कीर्त्तयेद्बुधः । पितृगोत्रादिवत्याश्च फलसङ्कीर्तनं ततः । पत्नीत्वेन तुभ्यमहं ददे इति समुत्सृजेत् ॥३॥ ननु सर्वत्र वाक्ये तु पितृपूर्वकसम्बन्धकथनाऽभिधानत्वे सिद्धे प्रपितामहपूर्वकामिति वाक्ये कथमिति चेत्तत्राह । प्रपितामहपूर्वकमेव विवाहादौ वाक्यमृषिभिः प्रोक्तम् प्रमाणन्तत्र ब्रह्मपुराणे । नान्दीमुखे विवाहादौ प्रपितामहपूर्वकम् । वाक्यमुच्चारयेत्प्राज्ञोऽप्यन्यत्र पितृपूर्वकम् ॥१॥ इति प्रपितामहादिसम्बन्धनिरूपणमपि अमुकगोत्रस्याऽमुकप्रवरस्यामुकवेदिनोऽमुकसूत्रिणोऽमुकशाखिनोऽमुकाऽभिधानस्य प्रपौत्रायेत्यादिकमपि यत् तत्त्रिवारं वाक्यं पठेत् तथैव निरूपणात् ।

## प्रतिगृह्णात्वयं विधिः । इति दाता पठेत् । विप्रातिरिक्तग्रहीतृपक्षे विप्रोऽसावित्यत्र वरोऽसाविति पठेत् ।

तथा च कर्म्मदीपिकायाम् । कन्यावरौ युतौ कृत्वा दाता स्वर्गादिसिद्धये । कन्यादानस्य वाक्ये तु द्वयोः सम्बन्धकीर्तनम् । प्रपितामहादिमारभ्य गोत्रप्रवरादिसंयुतम् । कुलसम्बन्धकरणं त्रिस्त्रिवारमुदीरणमिति । कर्म्मकन्दल्यामपि सम्बन्धमाभाषणपूर्वमाहुरिति । आभाषणं परस्परमभिमुखीभूय पुनःपुनर्वार्ताकरम् तदेव पूर्वं मुख्यं यत्र तत्सम्बन्धमाहुरित्यर्थः । अन्यत्राऽपि । मैत्री सप्तपदी प्रोक्ता सप्तवाक्याथवा भवेत् । सत्तराणान्तुत्रिपदी सत्तमानां पदेपदे इति वचनात् । द्वयोर्योनिसम्बन्धजमैत्रीकरणे त्रिवारोच्चारणमेव । योनिसम्बन्धजा मैत्री तत्तुल्या नापरा स्मृता । अन्याश्चोत्पद्य नश्यन्ति नित्या मैत्रीयमुच्यते ॥ योनिसम्बन्धजा मैत्री वैरत्वेऽपि न नश्यतीति धर्म्मवचनात् । सम्बन्धानान्तु सर्वेषां योनिसम्बन्धमुत्तमम् । अन्यत् क्रोधे विनश्येत इदं तु न विनश्यति । इति भृगुवचनात् । अथ कन्यादानप्रयोगो लिख्यते । उत्तरत्र पित्रा प्रत्ता इति सूत्रस्मरणात् । उत्तरत्र वाग्दानानन्तरं पित्रा जनकेन प्रत्ता विधिपूर्वकमर्घ्यमर्च्चयित्वा सङ्कल्पदत्ता वरगोत्रा तदधीना तदर्द्धशरीरा तत्कृतमर्धधर्म्मग्रहणवती तद्गृहाधिष्ठात्री तत्सर्वसम्पत्स्वामिनी स्यादिति सूत्रार्थः । अथ कन्यादानसङ्कल्पवाक्यं लिख्यते । सर्वदानेभ्यः कन्यादानस्यैवोत्कृष्टत्वात्सङ्कल्पवाक्यस्याप्युत्कृष्टत्वमेव प्रदर्शितमिति तात्पर्यम् । कन्यादानात्परं दानं न भूतं न भविष्यति इति वचनात् । तथा च गौतमः स्मरति । अश्वमेधः क्रतुवरो यथा यज्ञेषु चोत्तमः । एवं सर्वेषु दानेषु कन्यादानं प्रशस्यत इति । तथा च सूतसंहितायाम् । अश्वमेधसहस्रस्य वाजपेयशतस्य च । एककन्याप्रदानेन फलमाप्नोति ना कलाविति । सुमन्तुस्तु । यत्पुण्यं कोटियज्ञानां वेदपारायणे फलम् । कोटितीर्थस्नानजञ्च कन्यादानं ततोऽधिकमिति । एकविंशति वंश्यानामा-

त्मना सह भूपते । एकस्मात्कन्यकादानाद्ब्रह्मलोकमनश्वरम् ॥ एकस्मिन्कन्यकादाने सर्वं कर्म्म समाप्यते इति युधिष्ठिरंप्राति श्रीकृष्णवाक्यम् ॥ अथ सङ्कल्पः । ॐ हरिः श्रीविष्णुः पुण्डरीकाक्षः पुनातु अद्य तत्सत् ब्रह्म अथानन्तवीर्य्यस्य श्रीमदादिनारायणस्याचिन्त्याऽपरिमितानन्तशक्तिसमन्वितस्य स्वकीयमूलप्रकृतिपरमशक्त्या प्रक्रीडमानस्य सच्चिदानन्दसन्दोहरूपे स्वात्मनि सर्वाऽधिष्ठाने स्वाज्ञानकल्पितानां महाजलौघमध्ये परिभ्रम्यमाणानामनेककोटिब्रह्माण्डानामेकतमेऽस्मिन ब्रह्माण्डेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशादिभिर्दशगुणोत्तरैरावरणैरावृते आधारशक्तिश्रीकूर्म्मवराहधर्म्मानन्ताष्टदिग्गजादिप्रतिष्ठिते ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाख्याष्टदिग्दन्तिशुण्डादण्डोत्तण्डितैतद्ब्रह्माण्डखण्डयोरन्तर्गतभूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकाख्यानां सर्वज्ञसर्वशक्तिसमन्वितसर्वोत्तमसर्वाधिपश्रीचतुर्मुखप्रभृतिस्वस्वलोकाधिष्ठातृपुरुषाधिष्ठितानामधोभागे फणिराजस्य शेषस्य सहस्रफणामण्डलैकफणोपरिसर्षपैककणायमानमहीमण्डलान्तर्गतातलवितलसुतलतलातलमहातलरसातलपातालानां स्वस्वाधिष्ठात्रधिष्ठितानामुपरितने सुमेरुमन्दिरमन्दराचलनिषधहिमगिरिशृङ्गवद्धेमकूटदुर्द्धरपारियात्रशैलमहाशैलमहेन्द्रसह्याद्रिमलयाचलविन्ध्यर्क्षमूकचित्रकूटमैनाकमानसोत्तरत्रिकूटोदयाचलास्ताचलपर्य्यन्तानेकाभिधानाद्रिगणप्रतिष्ठितायां जम्बूप्लक्षशाल्मलीकुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपवत्यां लवणेक्षुसुरासर्प्पिर्दधिक्षीरशुद्धोदकाख्यसप्तसागरसमन्वितायां समस्तभूरेखायां कमलकदम्बगोलकाकारायां वर्त्तमाने कुवलयकोशान्तर्गतदलवद्विराजमाने उत्तरकुरुहिरण्मयरम्यकभद्राश्वकेतुमालेलावृतहरिवर्षकिम्पुरुषभारताख्यनवखण्डवति जम्बुद्वीपे सर्वेभ्योऽप्यतिरिक्तसारवति देवादिभिरप्यभीष्टसुकृतक्षेत्रभूतहेतुनाभिलषिततमे अङ्गवङ्गकलिङ्गकालिङ्गकाम्बोजसौवीरसौराष्ट्रमहाराष्ट्रवङ्गालोत्कलमगधमालवनेपालकेरलचोरलगौडमलपा-

ङ्वालसिंहलमत्स्यद्रविडद्राविडकर्णाटराटवशूरसेनकौङ्कणटोंकणपाण्ड्यपुलिन्धा-न्ध्रद्रौणदशार्णविदेहविदर्भमैथिलकेकयकोशलकुन्तलमैन्ध्रुवजाबलसार्वसिन्धु-शालभद्रमध्यदेशपर्वतकाश्मीरपुष्टाहारसिंधुपारसीकगान्धारबाह्लीकप्रभृतिबहुवि-धदेशविशेषसम्पन्ने दण्डकारण्यमहारण्याद्वैतारण्यकामुकारण्यसैन्धवारण्यप्रभृ-त्यनेकारण्यवति श्रीगङ्गायमुनासरस्वतीगोदावरीनन्दालकनन्दामन्दाकिनी-कौशिकीनर्म्मदासरयूकर्म्मनाशाचर्मण्वतीक्षिप्रावेत्रवतीकावेरीफल्गुमार्कण्डेयराम-गङ्गाशतद्रुविपाशैरावतीचन्द्रभागावितस्तासिन्धुदृषद्वतीप्रभृत्यनेकनदनदीवति कुरुक्षेत्रहरिद्वारक्षेत्रमालक्षेत्रादिबहुक्षेत्रान्विते भारतखण्डे तत्रापि मध्यरेखाकु-रुक्षेत्रादमुकदिग्भागे अमुकामुकनदीमध्ये श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्त-रेऽष्टाविंशे कलौ युगे कलिप्रथमचरणे आर्य्यावर्त्ते पुण्यबृहस्पतिक्षेत्रे शुभसंव-त्सरेऽस्मिन्नमुकायनगतसूर्य्येऽमुकर्त्तावमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरे य-था योगकरणमुहूर्त्ते वर्त्तमाने चन्द्रतारानुकूले पुण्येऽहनि अमुकगोत्रस्य यथो-क्तप्रवरस्यामुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्म्मणः प्रपौत्राय १ अमुकगोत्रस्य यथोक्तप्रवरस्यामुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकश-र्म्मणः पौत्राय २ अमुकगोत्रस्य यथोक्तप्रवरस्याऽमुकवेदिनोऽमुकशाखि-नोऽमुकसूत्रिणोऽमुकशर्म्मणः पुत्राय ३ अमुकगोत्रस्य यथोक्तप्रवरस्या-ऽमुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्म्मणः प्रपौत्रीम् १ अमुक-गोत्रस्य यथोक्तप्रवरस्याऽमुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुकशर्म्मणः पौत्रीम् २ अमुकगोत्रस्याऽमुकवेदिनोऽमुकशाखिनोऽमुकसूत्रिणोऽमुक-शर्म्मणः पुत्रीम् ३ इत्येवं गोत्रप्रवरादिनिरूपणपूर्वकप्रपितामहादि-संज्ञासम्बन्धकथनम् । त्रिरावर्त्य अमुकगोत्राय यथोक्तप्रवरायामुकवेदिने-ऽमुकशाखिनेऽमुकसूत्रिणेऽमुकशर्मणे ब्राह्मणाय वराय अमुकगोत्रां यथो-क्तप्रवराममुकनाम्नीमिमां कन्यां यथाशक्त्यलंकृतां महद्वस्त्रद्वयावृतां विवा-हदीक्षितां प्रजापतिदैवतकां गङ्गावालुकाभिः सप्तर्षिमण्डलपर्य्यन्तरा-

**ॐ स्वस्तीति वचनमुक्त्वा द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति मन्त्रेण कन्याहस्तं वरः प्रतिगृ-**

शीकृतरेणुपुञ्जस्य मध्याद्वर्षसहस्रावसाने एकैकवालुकापकर्षणेन सर्ववालुकापकर्षणपरिमितकालपर्य्यन्तं ब्रह्मलोकनिवाससिद्ध्यर्थं तिलैः सूर्यमण्डलं यावद्राशीभूततिलगिरितो वर्षसहस्रावसाने एकैकतिलापकर्षणेन सर्वतिलापकर्षणसंमितकालपर्यन्तं सूर्यलोकनिवाससिद्ध्यर्थं यवैश्चन्द्रमण्डलपर्यन्तं कृतयवराशितो वर्षसहस्रावसाने एकैकयवापकर्षणेन सर्वयवापकर्षणपरिमितकालपर्यन्तं चन्द्रलोकनिवाससिद्ध्यर्थं माषैर्ध्रुवमण्डलपर्यन्तं राशीकृतमाषेभ्यो वर्षसहस्रावसान एकैकमाषापकर्षणसंमितकालं यावद्विष्णुलोकरुद्रलोकध्रुवलोकनिवाससिद्ध्यर्थं गन्धर्वाप्सरोगणमाण्डितहंसपारावतशुकसारिकारुतनादितकिङ्किणीशतसमलंकृतादिव्यविमानेन मनोऽभिलषितदेशगमनपूर्वकगिरिनदीनदसिन्धुद्वीपदिव्यदेशनन्दनचैत्ररथप्रभृतिस्थानेषु स्वाभिलषितभोग्यविषयोपभोगार्थं मया सह दशपूर्वेषां दशावरेषां मद्वंश्यानामग्निष्टोमातिरात्रवाजपेयपुण्डरीकाश्वमेधक्रतुशतफलजन्यब्रह्मलोकनिवासार्थं पत्नीत्वेन तुभ्यमहं सम्प्रददे इति शंखस्थद्रव्ययुतजलेन सह कन्याहस्तं वरहस्ते दद्यात् । इति सङ्कल्पविधिः ॥

**ॐ स्वस्तीति** ॥ वरश्च ॐ स्वस्तीत्युक्त्वा सङ्कल्पजलादिकमादाय द्यौस्त्वा ददात्विति मन्त्रेण कन्याहस्तं प्रतिगृह्णीयात् । ततः कन्यापिता दानप्रतिष्ठार्थं सुवर्णं गोमिथुनं वा दक्षिणां दद्यात् । अत्राचारादन्यदपि सुवर्णरजतताम्रगोमहिषीग्रामादिकं यौतकत्वेन कन्यायै यथासम्भवं ददाति अन्येऽपि बान्धवादयो यथासम्भवं यौतकं चात्र प्रयच्छन्ति । केचित्तु होमान्ते प्रयच्छन्ति केचिद्वधूवरविसर्जने खट्वादिसर्वदानादिकं कुर्वन्तीति देशाचारतो व्यवस्था बोध्या । तथा चोक्तम् । कन्याप्रदानन्तु विधाय तातस्तद्दक्षिणां गोमिथुनं सुवर्णम् । दत्वा प्रदद्याद्धरणं वरार्थं वस्त्राणि पात्राणि विभूषणानि । तत्रैव देयानि बहुश्रुता जगुर्वाल्मीकिजाबालिपराश-

**ह्णीयात् । ततः कन्याप्रदः अद्य कृतैतत्कन्यादानयथोक्तफलावाप्तये कन्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय वराय दक्षिणां तुभ्यमहं सम्प्रददे इति दक्षिणां गोमिथुनं वा दद्यात् । ॐ स्वस्तीति वरः प्रतिब्रूयात्** ततःकोदादिति ॥ **ॐ कोदात् कस्मादात्कामोदात्कामायादात्कामो दाता कामः प्रतिग्रहीता कामैतत्ते**

राद्याः । होमान्त आहुर्भृगुनारदाद्या विसर्ज्जने व्यासमरीचिकौत्सा इति मतभेदेन विभाषेतिवचनाद्देशाचारकुलधर्म्मानुसारेण ये यथा कुर्वन्ति ते तथैव कुर्य्युरित्यर्थः । द्यौस्त्वेति मन्त्रस्य विनियोगाद्यभावः प्रतीकमात्रत्वात् मन्त्रस्येति हेतोः । अथ मन्त्रार्थः । दीव्यन्तीति द्यौर्लोकः त्वा त्वामदात् तव दानेन स्वर्गसाधकोऽभूत् । पृथ्वी प्रथितुं शीला देवता त्वा प्रतिगृह्णातु पुत्रपौत्रादिविस्तारेण त्वां प्रथयित्री भवतु एष तात्पर्य्यार्थः । हे कन्ये तवायं पिता त्वां दत्वा तत्संभवपुण्यातिशयेन स्वर्ग्गादिषु निरतिशयानन्दं भोक्ष्यमाणोऽवस्थितः । अथ प्रथयितुं शीला पृथ्वी यथा त्वया प्रसन्ना प्राक्तनपुण्यवश्या त्वां पुत्रपौत्रादिविस्तारे गणने गौणीलक्षणया पृथ्वी अयं वर एव त्वा त्वां प्रथयितुं प्रतिगृह्णातु । त्वत्प्रतिग्रहमकार्षीत् इति मन्त्रेण कन्याकरं गृह्णीयात् । ततः कन्याप्रदेन कन्यादानप्रतिष्ठार्थं दत्तां दक्षिणां प्रतिगृह्य वरः कामस्तुतिं कुर्य्यात् कोदादिति । अदात् दत्तवान् इति स्वयमेव वरेण कृतः प्रश्नः । अथोत्तरं कामः अदात् कामायादात् यतः कामो दाता कामः प्रतिग्रहीताऽतो हे काम अभिलषित एतत्ते कन्यादानप्रतिग्रहादिकं तत्र कामशब्देनेच्छाऽभिधीयते यत इच्छयैव दीयते प्रतिगृह्यते च तथा च तत्प्राधान्यप्रतिपादनेन दातृत्वं प्रतिग्रहीतृत्वञ्च कामस्यैवोक्तं तेन कामस्तुतिर्वाक्यार्थः । अस्य महाप्रति-

इति वरः पठेत् १। ततस्तां पणौ गृहीत्वा ॐ यदैषि मनसेत्याऽथर्वणऋषिः लिङ्गोक्ता देवता अनुष्टुप्छंदो निष्क्रमणे विनियोगः । ॐ यदैषि मनसा दूरं दिशोनु पवमानो वा हिरण्यपर्णो वैकर्णः स त्वा मन्मनसांकरोतु श्री अमुकदेवीति पठन्निष्क्रामति ॥ ततो वेदिदक्षिणस्यां दिशि वारिपूर्णकलशं ऊर्ध्वं तिष्ठतो मौनिनो दृढपुरुषस्य स्कंधे अभिषेकपर्य्यंतं धारयेत् ॥ ततः परस्परं समीक्षेथां इति प्रैषानन्तरं अघोरचक्षुरित्यादिचतु-

ग्रहत्वं ज्ञात्वा मनसि प्रतिग्रहस्य सन्तापं विधाय कामस्तुतिमकरोत् । धन्यो महाबलोऽयं कामो येन विश्वविजयिनोऽप्रतिग्राही क्षत्रियादिरपि प्रतिग्राहीकृत इति पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीति सूत्रबलात् पित्रा जनकेन प्रत्तां सङ्कल्प्य दत्तामादाय प्रतिग्रहविधिना प्रतिगृह्य गृहीत्वा हस्ते धृत्वा निष्क्रामति गृहमध्यान्मण्डपादग्निसमीपं गन्तुं यदैषीत्यादिना करोत्वमुकदेवीत्यन्तेन मन्त्रेण निष्क्रामतीति पित्रा प्रत्तामादाय गृहीत्वेति प्रतिग्राही अप्रतिग्राहिणोरित्युभयग्रहणमप्रतिग्रहस्यापि प्रतिग्रहविधिना दानं यथा स्यादिति अप्रतिग्रहाश्चान्ये इति शब्दस्य निरुक्तिः मन्त्रे च दीव्यते क्रीडते स्वर्गादौ कन्यादानजन्यपुण्यातिशयेनेति कन्याप्रदाता तत् पित्रादिर्द्यौरिति सिद्धम् । हे कन्ये द्यौस्त्वत्प्रमाता पित्रादिस्त्वा त्वां ददातु अदादित्यर्थः । अत्र छन्दसि व्यत्ययेनेति लुङर्थे लोट् इति वचनात् । पित्रा प्रत्तामित्यत्र पितेत्युपलक्षणम् दात्रा प्रत्तामिति । पिता पितामहो भ्राता स्वकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ इति याज्ञवल्क्येन अन्येषामपि कन्यादानेऽधिकारस्मरणात् । यदैषीति मन्त्रस्यार्थः । हे कन्ये यद्यतस्त्वं पितृगृहात् दूरं एषि आगच्छसि मनसाऽनु-

र्णां मंत्राणां प्रजापतिर्ऋषिर्द्वितीयमंत्रस्याऽनुष्टुप्छंदः त्रयाणां च त्रिष्टुप्छंदः सोमोगंधर्वाग्नयो देवताः कुमारीसमीक्षणे विनियोगः ।

**ॐ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः वीरसूर्देवकामास्योना शन्नो ३ भव द्विपदे शं चतुष्पदे ॥ सोमः प्रथमो विविदे गंधर्वो विविद उत्तरस्तृतीयोग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥**

कूलया मनोवृत्त्या दिशः प्राच्याद्या अनुपवमानो वायुरिव वाशब्दः उपमार्थः अतः स वायुः त्वा त्वां मन्मनसां मदेकनिष्ठचित्तां करोतु । किंभूतः हिरण्यपर्णः हिरण्यं जर्जरवत्पर्णं पतनं यस्य सः विशिष्टः आश्रयत्वेन प्रसिद्धः कर्ण एव यस्य सः कार्य्यस्य वायोः कारणस्याकाशस्य कार्य्यकारणसम्बन्धात् वायोः कर्णाश्रयत्वम विकर्ण एव वैकर्णः स्वार्थेऽण् असाविति मन्त्रान्ते वरेण कन्यानामग्रहणम् हे अमुकदेवीति यद्वा हे कन्ये त्वं यद्यस्मान्मन्मनोमय्या वृत्त्या दूरं एषि अत्यन्तं चिन्तयसि धातूनामनन्तार्थत्वात् पितृकुलतो बहिर्भूता कुत्राऽनेन नीतेति मनसा दूरं गच्छसि अतिशयेन सोत्कण्ठा भवसीति यावत् । तत्र दिशः प्राच्याद्या अनु अनन्तरं पवमानः पवनश्च हिरण्यपर्णः सूर्य्यश्च हिरण्यं हिरण्मयं पर्णं रश्मयो यस्य सः प्रकाशबाहुल्यात् वैकर्णोऽग्निश्च विकर्णे कोटरं तस्मिन्भवः वैकर्णः वाशब्दः समुच्चये । ते सर्वे दिग्वायुसूर्य्यादयः त्वा त्वां मन्मनसां मद्गतहृदयां करोतु कुर्वन्त्विति वचनव्यत्ययः छान्दसः । सेयं कन्यकोत्कण्ठानिवृत्तिः स्वहृदयैक्याशंसा च वाक्यार्थः । अथैनौ समीक्षयतीति सूत्रबलात् कन्यापिता एनौ वधूवरौ समीक्षणक्रियां कारयति अघोरचक्षुरित्यादिमन्त्रैः कारिते अर्थे बद्धेषणौ युवां परस्परं समीक्षेथामिति कन्याप्रदः प्रेरयतीति तात्पर्य्यार्थः । मन्त्रपाठस्तु मन्त्रलिङ्गाद्वरस्यैव । अथ मन्त्रार्थः । हे कन्ये त्वं अघोरचक्षुः सौम्यदृष्टिरपापदृष्टिरिति वा एधि भव तथा अपतिघ्नी अकार्य्यकरणेन पत्यर्थघा-

ॐ सोमोऽददद्गन्धर्वाऽय गन्धर्वोददददग्नये । रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामीरयसा नः ऊरू उशती विहर यस्यामुशन्तः प्रहराम शेफं यस्यामु कामा बहवो निविष्टयै इति

तिनी मा भव । एतस्मात्संस्कारात विवाहसंस्कारात् पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी भव सुमनाः प्रसन्नचेताः सुवर्च्चाः सुप्रभावयुक्ता वीरसूः सत्पुत्रजनित्री देवकामा देवान् अग्न्यादीन् कामयते सेवार्थमिच्छतीति यद्वा देवं देवनं क्रीडनं कामयते इति सा स्योना सुखवती नोऽस्माकं शं सुखं दुःखविनाशशीलत्वेन सुखरूपा भव द्विपदे मनुष्यवर्गाय मनुष्यवर्गमुपकर्त्तुं तथा चतुष्पदे पशुवर्गाय पशुवर्गमुपकर्त्तुं शं सुखहेतुर्भवेत्याशंसा । अथ कन्यास्तुतिमाह सोम इति । हे कन्ये त्वां सोमश्चन्द्रो विविदे जन्मादिने लब्धवान् कीदृशः सोमः प्रथम आद्यस्ते तव पतिः रक्षकः जन्मदिनतः प्रभृति सार्द्धं वर्षद्वयं यावत् । चन्द्रो मदीया मे रक्षणीयेति लब्धवान विविद इति "विद्‌लृ लाभे" इति धातो रूपम् । ततः सार्द्धवर्षद्वयानन्तरं गन्धर्वः सूर्य्यः । गन्धर्व इति सूर्य्यस्य नाम बोध्यम् । गन्धर्वदेवतां बालां विविदे चन्द्रमसैव प्रतिपोष्य दत्तां त्वां लब्धवान् । मया सर्वथेयमध्यापनीयेति । अतः उत्तरः द्वितीयोऽयं तव पतिः ततः पञ्चवर्षानन्तरं अग्निरपि तावत्कालं सार्द्धसप्तवर्षपर्य्यन्तं विविदे संस्काररूपां विद्यामध्यापयित्वा लब्धवान् । मया सर्वथेयं शोध्येत्येवं विविदे अतोऽयमग्निस्तव तृतीयः पतिः । तथा सोमगन्धर्ववह्निभिः प्रतिपोष्याध्याप्य परिशोध्य च त्यक्तां सार्द्धसप्तवर्षानन्तरं ते तव तुरीयश्चतुर्थश्चिरकालभोगाय पतिर्मनुष्यजः मानुषोऽहमेवेत्यर्थः । यथाहुः । पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः । प्रतिपोष्याध्याप्य शोध्य परित्यक्तां नरो भजेत् इति । अत एव सार्द्धसप्तवर्षान्ते कन्या परिणेयेति भावः । ननु किमिदानीं चतुर्णामियं

वरः पठित्वा परस्परं निरीक्षेथाम् । ततोऽग्निं प्रदक्षिणीकृत्य पश्चादग्नेरहतवस्त्रवेष्टिततृणपूलकं कटं वा निवेश्य तदुपरि दक्षिणचरणं दत्वा वधूं दक्षिणतः कृत्वा तामुपवेश्य पुष्पचन्दनताम्बूलवासांस्यादाय।

पत्नी नेत्याह । सोमो ददिति । अथ मन्त्रार्थः । सोमश्चन्द्रः त्रिंशन्मासान् भुक्त्वा प्रतिपोष्य संस्कारतया रूपं दत्वा गन्धर्वः सूर्य्यः तस्मै अददत् ददौ। सोऽपि तावत्कालं भुक्त्वा संस्कारत्वेनाध्याप्याग्नयेऽददत् । मह्यमिमामग्निर्मह्यमिमामदात् दत्तवान् न केवलमिमां किन्तु पुत्रान् सुतान् रयिं च धनं चकाराद्धर्मादिकम् अददिति सम्बन्धः तथा च सोमगन्धर्ववह्निभिः सौन्दर्य्यादिकदानादिना भुक्ताः स्त्रियो रूपस्वरमेध्यत्वसम्पन्नाः । उक्तञ्च । सोमो रूपं ददौ स्त्रीणां गन्धर्वस्तु शुभां गिरम् । पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यत इति । सा न इति चतुर्थमन्त्रस्य व्याख्यानं क्रियते । या जगच्चक्षुः पूषादेवता सा इमां कल्याणगुणशीलां कृत्वा नोऽस्मान् प्रतीरय ईरयतु अस्मास्वनुरक्तां करोत्वित्यर्थः । ईरयेति शपो दर्शनं विभक्तेरदर्शनञ्च छान्दसम् । सा नोऽस्मत्तः उशती सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी विहर विवृणोतु प्रसारयत्वित्यर्थः । विहरेति उपसर्गेण धात्वर्थः प्रसारणे सम्भूतः । उपसर्गेण धात्वर्थो बलादन्यत्र नीयते इत्युक्तेः । मध्यमपुरुषप्रयोगः छान्दसः । ऊरूप्रसारणे प्रयोजनमाह । यस्यां स्त्रियां स्त्रियामित्युपलक्षणम् स्त्रीयोनाविति भावः । उशन्तः पुत्रान् सुखञ्चेच्छन्तः शेफं शिश्नं प्रहराम प्रवेशयाम । प्रहरामेत्यत्राप्युपसर्गबलादेव प्रवेशनमर्थः । पुच्छे शेफश्च लिङ्गे तु शेफः केशे भगे तथा । भगलिङ्गोद्भवे केशे शष्पन्तु समुदीरितामिति कोशोक्तिः । यस्याञ्च कन्यायां उ एवार्थे यस्यामेव बहवः कामाः धर्म्मपुत्ररतिसुखादिरूपाः सम्भवन्ति कस्यै निविष्ट्यै अग्निहोत्राद्युपासनयान्तःकरणशुद्धिद्वारा सायुज्यमुक्तये इत्यर्थः । इति

ॐ तत्सदद्यकर्त्तव्यविवाहहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्म कर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिर्ब्रह्मत्वेन त्वामहं वृणे इति ब्रह्माणं वृणुयात् । वृतोऽस्मीति प्रतिवचनम् । यथाविहितं कर्म्म कुर्विति वरेणोक्ते

चतुरो मन्त्रान्वरः पठेत् । पठनानन्तरं परस्परं निरीक्षेथां कन्यावराविति शेषः । प्रदक्षिणमग्निं पर्य्याणीयैके इति सूत्रम् । अस्यार्थः एके आचार्य्या अग्निं प्रदक्षिणं पर्य्याणीय कन्यां त्रिः प्रदक्षिणां कारयित्वा वासःपरिधानं समञ्जनं समीक्षणञ्च कथयन्ति । अन्ये तु समीक्षणानन्तरं कथयन्तीति । एके इति कथनात मतभेदेन विभाषा अतो नान्ये इति विकल्पसिद्धौ नियमं दर्शयन्ति सूत्रेण । पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रहृत्योपविशतीति सूत्रम् । अस्यार्थः पूर्वमग्निं पर्य्याणीय अग्नेः पश्चादग्निकार्य्यानन्तरं तेजनीं अहतवस्त्रवेष्टिततृणपूलकं वा तृणमयं कटं ततोऽन्यतरं दक्षिणपादेन प्रहृत्य आक्रम्य तदुपरि पादं कृत्वा दक्षिणपादेन नोल्लंघयेत् इत्यर्थः । उभयोः संस्कारार्थत्वात्सवधूक इत्यर्थः । वधूं दक्षिणतः कृत्वा । अर्थात् वधूं दक्षिणपार्श्वे नीत्वा स्वयं दक्षिणपादाक्रमणनिरूपणेनैव बद्ध्वा सव्यपदेन तेजनीप्रहरणं सिद्ध्यति । आक्रमणयोस्तुल्यत्वादाक्रमणमेव न तु पादस्पर्शमात्रं प्रहरणम् । तां वधूमुपवेश्य वरोऽप्युपविश्य वरणसामग्रीं पुष्पचन्दनादिकमादाय ब्रह्माणं वृणुयादिति सम्बन्धः । तत्र ब्रह्मणो वरणे वाक्यं दर्शयत्यद्येत्यादिना । अथ कुशकण्डिकायाः कृत्यमाह । तत्र वरः कर्म्मस्थानमागत्य चन्दनागुरुदेवदारुप्लक्षाश्वत्थवरणादियाज्ञिकवृक्षोद्भवासने प्रागग्रानुदग्रान्वाकुशान् दत्वा तत्रोपविश्य वाग्यतः शुद्धायां भूमौ सप्तविंशत्यङ्गुलमण्डलं परिलिख्य परिसमूह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो

करवाणीति ब्रह्मा ब्रूयात् । ततो वरोऽग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य । ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अत्र त्वं मे ब्रह्मा भवेत्यभिधाय कल्पितासने समुपवेशयेत् ॥ ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात ततः परिस्तरणं बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैर्ऋत्याद्वायव्यांतं अग्नितः प्रणीतापर्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतरगर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली संमार्जनार्थं कुशत्रयं उपयमनार्थं वेणीरूपकुशत्रयं समिधस्तिस्रः स्रुव आज्यं षट्पंचाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नं तंडुलपूर्णपात्रं पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयं ॥ अथ

ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे[१] कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्य्यग्नि कुर्य्यात् इति सूत्रम् । अस्यार्थः परिसमूह्य त्रिभिर्दर्भैः पांशूनपसार्य्य परिसमूहनं व्यासोऽप्याह । त्रिभिर्दर्भैर्महाराज पांशूनामपसारणम् परिसमूहनञ्चैतद्विज्ञेयं कर्म्मकोविदैरिति । परिसमूहनादयस्त्रिस्त्रिरित्यन्ये । दैवे परिसमूहनादिस्त्रिस्त्रिः पित्र्ये च सकृत्सकृत् इति कर्कः । उपलिप्येति गोमयोदकेनोपलेपनं कृत्वा उपलेपनमपि भूमिभेदेन द्विधा तत्र संवर्त्तः । भूमिश्चापि द्विधा होमे कृता

---

१ कुर्यात्पवित्रं द्विदलं ब्रह्मग्रन्थिसमन्वितम् । मध्ये मूले कुशौ छित्वा शंभुकोणे कुशांस्त्यजेत् ।

तस्यामेव दिशि असाधारणवस्तून्युपकल्पनीयानि तत्र शमीपलाशमिश्रा लाजा दृषदुपलं कुमारीभ्राता सूर्पः दृढपुरुषः अन्यदपि तदुपयुक्तमालेपनादिद्रव्यं ततः पवित्रच्छेदनकुशैः पवित्रे छित्वा ततः सपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निधाय अनामिकांगुष्ठाभ्यां उत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनं ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं अनामिकांगुष्ठाभ्यां द्वाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुदिंगनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणं प्रोक्षणीजलेन यथा सादितवस्तुसेचनं ततोऽग्निप्रणीतयोर्मध्ये प्रोक्ष-

चैवाकृता तथा । कुण्डाकारालेपितायाऽकृता भूमिः प्रकीर्तिता ॥ सिकतादिविहिता या स्यादुच्चा तु पूर्वभूमितः । कृता सा भूमिका ज्ञेया तत्र लेपस्तु सेचनम् । दर्शवद्धस्तसंघर्षैः कृतायां लेपनं स्मृतम् ॥ आलिख्येति स्फ्येन प्रागग्रा उदक्संस्थाः स्थाण्डिलपरिमाणाः प्रादेशपरिमिता वा तिस्रो रेखाः कृत्वा । आलेखनं मनुरप्याह । खादिरं करमात्रञ्च खड्गाकारं तथैव च । वदने गोपदाकारमुद्दिष्टं स्फ्यं स्वयम्भुवा । तेन त्रिलेखाकरणं प्रागग्रं चोत्तरोत्तरम् ॥ तदालेपनकं प्रोक्तं संस्कारो होमकर्मणि इति उद्धृत्येति अनामिकाङ्गुष्ठाभ्यां यथा क्रमोल्लिखिताभ्यो लेखाभ्यः पांशूनुद्धृत्य । उद्धरणमाह संवर्त्तः । पांशूनादाय रेखाभ्य आलेखनयथाक्रमम् ॥ अङ्गुष्ठानामिकाभ्यां च प्रक्षेपस्तु बहिर्भवेत् । तमुद्धरं विदुः प्राज्ञाः संस्कारे ये च कोविदाः । इति ॥ अभ्युक्ष्येति मणिकाद्भिरभिषिच्य रत्नाम्बुभिरुन्मृज्य यदि वा " मणिकाः स्थूलबिन्दव " इति कोशोक्त्या स्थूलबिन्दुरूपाभिरद्भिरभिषेचनं कृत्वा । अभ्युक्षणमाह पराशरः । उद्धरणानन्तरं यत्सुरत्नाणोभिषेचनम् । अभ्युक्षणं तदाहुर्वा स्थूलबिन्द्वभिषे-

# णीपात्रनिधानं आज्यस्थाल्यामाज्यनिर्वापः ततोऽधिश्रयणं ततो ज्वलत्तृणादिना हविर्वेष्टयित्वा प्रदक्षिणक्रमेण वह्नौ तत्प्रक्षेपः पर्यग्निकरणं ततस्त्रिः स्रुवप्रतपनं कृत्वा संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेन अभ्युक्ष्य पुनः

चनम् इति ॥ अग्निमुपसामाधायेति इत्थं पञ्चभूसंस्कारविधानानन्तरं अग्निमुपसमाधाय कर्म्मसाधनभूतं लौकिकं दिव्यं वा स्मार्त्तं श्रौतं वा आत्माभिमुखं कांस्यपात्रेण समाधाय स्थापयित्वा । एते संस्कारास्तु पूर्वमेवाग्निसमाधानसमये कृताः तत्रैवोचितत्वात् । तदेवाह सूत्रार्थनिरूपणे भाष्यकारः । तत्र परिसमूहनादयः पञ्च भूमिशुद्ध्यर्थं धार्य्या इति केचित् । तदयुक्तम । नह्यशुद्धदेशे अग्निस्थापनप्रवृत्तिरुचितेति तस्मादग्न्यर्था एवेत्यपरे अतो यत्राग्नेः स्थापनं तत्रैव ते कर्त्तव्या इति भावः । अथानन्तरसंस्कारानाह तत्र सूत्राण्याह । दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरूप्याज्यमधिश्रित्य पर्य्यग्निकुर्य्यात् । स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधो निधाय पर्य्युक्ष्य जुहुयात् । एष एव विधिर्य्यत्र क्वचिद्धोमः कर्त्तव्यः ॥ दक्षिणतो ब्रह्मासनमास्तीर्य्येति ततो वरोऽग्नेर्दक्षिणतः शुद्धमासनं विधाय तदुपरि प्रागग्रान्कुशानास्तीर्य्य आस्तीर्य्येति अत्र ब्रह्मण आसनमात्रं स्यान्न ब्रह्मोपवेशनम् । आस्तरणोपदेशात् । क्वचिच्चोपवेशनविधानाद्दक्षिणतो ब्रह्मोपवेशनं तन्न अदृष्टप्रसङ्गात् नह्यदृष्टार्थं कश्चिदासनप्रकल्पनं कुर्य्यात् । तदा ब्रह्मासनव्यपदेशानुपपत्तेश्च तस्माद्ब्रह्मोपवेशनार्थमासनं स्तरणञ्च यत्तूक्तम् दक्षिणतो ब्रह्माणमुपवेश्येति तदुदपात्रस्थापनावसरविधित्सया प्रस्तुतब्रह्मोपवेशनं अस्यैव ज्ञापनं ब्रह्मासन-

प्रतप्य स्रुवं दक्षिणतो निदध्यात् तत आज्याग्नेरवतारणं तत आज्ये प्रोक्षणीवदुत्पवनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनं तत उपयमनकुशान् वामहस्तेनादाय उत्तिष्ठन्प्रजापतिं मनसा

मास्तीर्य्येति । अस्यार्थः । तस्याग्नेर्दक्षिणतो ब्रह्मणे आसनं वरणादियज्ञियदारुनिर्मितं पीठमास्तीर्य्य कुशैः स्तृत्वा तत्रावरणाभरणाभ्यां पूर्वसम्पादितं कर्म्म तत्त्वज्ञं ब्राह्मणं तदभावे पञ्चाशत्कुशनिर्मितं अग्नेरुत्तरतः प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनोऽनुलेपनपुष्पमाल्यवस्त्रालङ्कारादिभिः सम्पूज्याऽमुककर्म्मणि कृताकृताऽवेक्षणरूपब्रह्मकर्म्मकर्त्तुममुकशर्म्माणं त्वामहं वृणे वृतोऽस्मीति प्रतिवचनम । यथाविहितं कर्म्म कुर्विति ब्रूयात् करवाणीति प्रतिवचनम् । ततोऽमुकशर्म्मन्नमुकगोत्र ब्रह्मन् त्वं मे ब्रह्मा भवेति भवानीत्युक्तवन्तं तस्मिन्नासने पूर्वकल्पिते समुपवेशयेदिति । प्रणीयेति प्रणीय अप इति शेषः अपां हि प्रणयनं सर्वार्थे दृष्टं तद्वदत्रापि सर्वार्थानामपां प्रणयनम् । तद्यथा अग्नेरुत्तरतः प्रागग्रकुशैरासनद्वयं कल्पयित्वा वारणं द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तरं चतुरङ्गुलखातञ्चमसं सव्यहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य पूर्वासने स्थापयित्वा । परिस्तीर्य्येति । परिस्तीर्य्य किं अग्निं तदेव विशदयति बर्हिर्मुष्टिमादाय तच्चतुर्भागेन प्रागग्रैर्बर्हिभिः ईशानादिराग्नेयान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्य्यन्तं अग्नेः परिस्तरणं कृत्वेत्यर्थः । अर्थवदासाद्येति । प्रयोजनवत्पात्राणि आसाद्येत्यर्थः । प्रयोजनं च कार्य्यक्रमेण मुख्यक्रमानुरोधात् । यावद्भिः पदार्थैः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राञ्चः । उदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्य तद्यथा पवित्रच्छेदनानि त्रीणि कुशतरुणानि पवित्रे । साग्रे अनन्तरगर्भे द्वे कुशतरुणे । प्रोक्षणीपात्रं वारणं द्वादशा-

**ध्यात्वा तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः क्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निपर्युक्षणं कृत्वा प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रम्हणान्वारब्धः ॥**

ङ्गुलदीर्घं करतलसम्मितखातं पद्मपत्राकृति कमलमुकुलाकृति वा आज्यस्थाली तैजसी मृण्मयी वा द्वादशाङ्गुलविशाला वा प्रादेशोच्चा । तथैव चरुस्थाली सम्मार्जनकुशास्त्रयः । तदुपयमनकुशास्त्रिप्रभृतयः । समिधस्तिस्रः पालाश्यः प्रादेशमात्राः । तत्र देवलोक्ताः कारिकाः । प्रणीता नैर्ऋते भागे तद्वायव्यगोचरे । वारणं संविजानीयात् सर्वकर्म्मसु कारयेत् । सर्वसंशोधनार्थोदपात्रं वारणमिष्यते । द्वादशाङ्गुलदीर्घञ्च करतलोन्मितखातकम् । पद्मपत्रसमाकारं मुकुलाकारमेव वा । इति । तैजसी मृण्मयी वापि आज्यस्थाली प्रकीर्त्तिता । द्वादशाङ्गुलविस्तीर्णा प्रादेशोच्चा प्रमाणतः ॥ ३ ॥ चरुस्थाली तथैवापि दीर्घोच्चा तु प्रमाणतः । नानयोरन्तरं यस्माद्द्रव्यसंस्कारणार्थक इति । एताश्चतस्रः कारिकाः श्रुत्यनुरुद्धाः आपस्तम्बवसिष्ठदेवलपराशरऋषिभिः क्रमतः प्रोक्ता विज्ञेयाः संमार्गा इति । संमृज्यते स्रुवो यैस्ते संमार्गाः । सम्पूर्वकाद्यञ्प्रत्ययान्तो मृजूष्शुद्धावित्यस्य प्रयोगः । सम्मार्जनार्थास्त्रयस्त्रिसंख्याकाः कुशाः त्रय एव नाधिका न न्यूनाः तत्र कात्यायनोक्तसूत्रानुविद्धा व्याससस्मृतिकारिकाः स्रुवसंमार्जनार्थन्तु कुशत्रयमुदीरितम् । स्रुवाङ्गत्रयशुद्ध्यर्थं सूत्रे प्रोक्तास्त्रयस्ततः ५ इति । उपयमनकुशास्त्रिप्रभृतयः । उपयमनार्थमाख्यातास्त्रिषण्नवमिताः कुशाः । वेणीरूपा निरोधार्था निरोधे बहुभिः सुखम् इति भृगुवचनात् । समिधस्तिस्रः पालाश्यः प्रादेशमात्राः । अग्नेर्नैवेद्यपूजार्थं निक्षिपेत्काष्ठकत्रयम् ॥ पालाशजञ्च प्रादेशमात्रं दैर्घ्येण स्थूलता । कनिष्ठिकासमं ध्यात्वा विधिमग्नौ क्षिपेच्च तत् ॥ इति

पाराशरवचनात् । स्रुवो ब्रह्महस्तः तस्य लक्षणमाह कात्यायनः । स्रुव-स्तु ब्रह्महस्ताख्यः स्कन्धान्तो बाहुरुच्यते । स्वाहाकारस्वधाकारवषट्का-रसमन्वितः ॥१॥ दण्डाकारो भवेन्मूले स्यादरत्न्यां तु तत्समः । सकङ्कण-स्तु दण्डाग्रे हस्ताकारस्ततो बहिः ॥२॥ अष्टाङ्गुलिपरीमाणं मूलादभ्यन्तरे त्यजेत् । दशाङ्गुलिपरीमाणमारभ्याऽकङ्कणावधिः ॥३॥ हस्तमात्रं भवेद्धस्तः स्रुव इत्यभिधीयते । खादिरः शैंशिपो वाऽपि ह्यन्यो वा पुण्यवृक्षजः ॥ धावकोऽपि समाख्यातो होमार्थं मुनिभिः कृतः॥४॥ इति । प्रसङ्गात्पुष्करमप्याह। खादिरो हस्तमात्रः अङ्गुष्ठपर्वमात्रखातपरिणाहवर्त्तुलः पुष्करः । तदुक्तं मु-निना नारदेन । अङ्गुष्ठपर्वमात्रं वर्तुलखातपरिणाहसंयुक्तः खादिरो हस्तमात्रः करसंज्ञश्च होमविधौ इति । आज्यं तत्तु गव्यम् । तथाच श्रुतिः । गव्यमा-ज्यं जुहुयात् । तदभावे माहिषेयमिति । तथाच स्मृतिः । गव्यमाज्यं हुतं नित्यमभावे माहिषं स्मृतमिति । चरुश्चेद्व्रीहितण्डुलः शर्करा घृतसंयुक्तश्च-रुर्दैवे च पैतृके ॥ व्रीहितण्डुलसंसिद्धो मुख्यः प्रोक्तः सुरर्षिभिरित्याचार-चन्द्रोदये । षट्पञ्चाशदधिकमुष्टिशतद्वयपरिमिततण्डुलपूर्णपात्रं ब्रह्मणो दक्षिणापराद्धबहुभोक्तृपुरुषाहारक्षमतण्डुलपूर्णपात्रं मध्यमदक्षिणा तण्डु-लान्नपूर्णपात्रं अवरदक्षिणा यथाशक्ति हिरण्यादि द्रव्यं वा दक्षिणा । मतान्तरेण पूर्णपात्रलक्षणमाह । पलद्वयन्तु प्रसृतं मुष्टिरेकं पलं स्मृतम् । अष्टमुष्टिर्भवेत्कुञ्चस्ते चेदष्टौ तु पुष्कलम् ॥ पुष्कलानि च चत्वारि पूर्ण-पात्रं तदुच्यते ॥१॥ इति । पवित्रे कृत्वेति । प्रथमस्थापितत्रिकुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्रच्छिद्य । प्रोक्षणीः संस्कृत्येति । प्रोक्षणी-पात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदक-माक्षिप्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीपात्रे निधाय दक्षिणहस्तेन प्रोक्ष-णीपात्रमुत्थाप्य सव्यहस्ते कृत्वा तदुदकं दक्षिणेनोच्चाल्य प्रणीतोदकेन प्रोक्ष्य । प्रोक्षणीजलेन यथासादितवस्तुसेचनमिति निरूपयति । अर्थ-वत्प्रोक्ष्येति अर्थवन्ति प्रयोजनवन्ति आज्यस्थाल्यादीनि पूर्णपात्रपर्य्य-

न्तानि प्रोक्षणीस्थाभिरद्भिरासादितक्रमेणैकैकशः प्रोक्ष्य असञ्चरे प्रणीताग्न्योरन्तराले प्रोक्षणीं निधापयेत् । निरूप्याज्यमिति । आसादितमाज्यं आज्यस्थाल्यां पश्चादग्नेर्निहितायां निरूप्य प्रक्षिप्य चरुश्चेच्चरुस्थाल्यां प्रणीतोदकेनासिच्य आसादितांस्तण्डुलान्प्रक्षिपेत् अधिश्रित्येति ८ तत्र यदाज्यं तद्ब्रह्माधिश्रयति तदुत्तरतश्चरुं स्वयमधिश्रयति । तत्र क्रमः ब्रह्माज्यं गृहीत्वा स्वयञ्च चरुमेवं युगपदग्नावारोपयेतामिति आरोप्य च पर्य्यग्नि कुर्य्यात् । ज्वलदुल्मुकमादाय प्रदक्षिणमाज्यचर्वोः समन्तात्तस्य भ्रामणं पर्य्यग्निकरणम् । तथा च श्रुतिः । पर्यग्निकुर्वन् ज्वलदुल्मुकमादाय प्रदक्षिणमाज्यचर्वोः समन्तात् भ्रामयेत इति पर्यग्निकरणम् । स्रुवं प्रतप्येति स्रुवं दक्षिणेनादाय प्राञ्चमधोमुखमग्नौ तापयित्वा सव्ये पाणौ कृत्वा दक्षिणेन संमार्जनम् । तत्राग्रैर्मूलतोऽग्रपर्यन्तं सम्मृज्य मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तमिति । अभ्युक्ष्येति प्रणीतोदकेनाभिषिच्य पुनः पूर्ववत्प्रतप्य दक्षिणतो निदध्यात् । स्रुवस्यायं संस्कारो होमार्थः एवञ्च दृष्टार्थता तत्संस्कारस्य अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकं प्रागन्त्यहोमः कार्यः । ऊर्ध्वन्तु प्रायश्चित्तमात्रम् प्रोक्षण्युदकेनाभ्युक्षणमिति यदाह गार्ग्यः । स्रुवे संस्कारविस्मृत्य प्रायश्चित्तं शतं जपः । सावित्र्याः प्राक् तथान्त्ये च होमो व्याहृतिभिस्तथा । प्रायश्चित्तं विधायैव संस्कारोभ्युक्षणं स्मृतम् ॥१॥ इति । आज्यमुद्वास्येति आज्यमुत्थाप्याग्नेः सकाशाच्चरोः पूर्वेणाग्नेरुत्तरतोऽवस्थापयित्वा आज्यमग्नेः पश्चाच्चरोः पूर्वेणानीयाग्नेरुत्तरतो निधाय चरुं चाग्नेः पूर्वेणाज्यस्य पश्चादानीयाज्यस्योत्तरतो निधाय एवं त्रिचतुरादीन्यन्यान्यपि हवींष्युद्वासयेत् । अधिश्रितानां पूर्वेणोद्वासितानां पश्चिमतो हविष उद्वासनमिति याज्ञिकसम्प्रदायात् । उत्पूयेति तदेवाज्यमुत्पूय पवित्राभ्यां अनामिकाङ्गुष्ठाभ्यां गृहीताभ्यां पवित्राभ्यां द्रव्यविलोडनमुत्पवनमिति श्रुत्युक्त्या यथोक्तं आज्यमुत्पूय अवेक्ष्येति आज्यमवलोक्य आज्यावलोकनमपद्रव्यमपाकर्त्तुं सत्यपद्रव्ये

**अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳ सर्वत्र**

तन्निरसनं निरस्य चाज्यं पुनरुत्पूय प्रोक्षणीश्च पूर्ववदिति पवित्राभ्यामुत्पूय तास्वेव पवित्रनिधानं चशब्दादाज्यमपि पूर्ववदेव । अतः पवित्राभ्यामित्युक्तम् । प्रोक्षणीसंस्कारश्च पर्य्युक्षणार्थः स्रुवसंस्कारश्च होमार्थः । तत्संस्कारस्यादृष्टार्थता माभूदिति उपयमनान्कुशानादायेति । उपयमनानुपग्रहार्थीयान दर्भान् दक्षिणपाणिना गृहीत्वा सव्ये यथाविधि निधाय समिधो निधाय इति । पूर्वंस्थापितास्तिस्रः समिधः घृतेनाभिघार्य तिष्ठन् प्रक्षिप्य यादृश्यो समिधो निरूपितास्ताः प्रोक्ता व्यासकात्यायनवसिष्ठगौतमभरद्वाजैः । पलाशखदिराश्वत्थशम्युदुम्बरजा समित् । अपामार्गार्कदूर्वाग्निं कुशाश्चेत्यपरे विदुः ॥ १ ॥ सत्वचः समिधः स्थाप्या ऋजुश्लक्ष्णाः समास्तथा । शस्ता दशाङ्गुलास्तास्तु द्वादशाङ्गुलिकास्तु ताः ॥ ॥ २ ॥ आर्द्राः पक्वाः समच्छेदास्तर्ज्जन्यङ्गुलिवर्तुलाः ॥ अपाटिताश्च विशिखाः कृमिदोषाविवर्ज्जिताः ॥ ३ ॥ ईदृशीर्होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् । इति पर्युक्ष्य जुहुयादिति प्रोक्षण्युदकेन सपवित्रदक्षिणहस्तचुलुकेन गृहीतेन अग्निमीशानादि उदगन्तं परिषिच्य जुहुयात् । आघारादीन संस्रवणार्थं पात्रं प्रदक्षिणप्रणीताग्न्योर्मध्ये निदध्यात् एष एव विधिरिति । यत्र क्वचन लौकिके श्रौतस्मार्तकेऽग्नौ होमस्तत्र एष एव परिसमूहनादिपर्युक्षणपर्यन्तो विधिः न मन्त्राः समाम्नायाऽभावात् । यत्र क्वचिद्धोमः इति शान्तिकपौष्टिकादिष्वपि क्वचिद्ग्रहणञ्च गृह्याग्निव्यतिरेकेणापि यथास्यादिति । इति श्रीकुशकण्डिकाविधिः ॥ अन्वारब्धआघारावाज्यभागाविति । अत्र वैवाहिकहोमप्रसङ्गेन सर्वकर्मसाधारणीं परिभाषां करोत्याचार्यः । अन्वारब्धो यथा ब्रह्मणा दक्षिणहस्तेन दक्षिणहस्तस्थकुशेन वाऽनुस्पृष्टः आघारौ आघारसंज्ञिके आज्याहुती पूर्वोत्तराघारे प्रतिनिगद्य होमत्वं यथा मनसा । प्रजापतये स्वाहा इदं प्रजापतये

**प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः । सर्वप्रायश्चित्तं प्राजापत्यान्तरमेतदवापस्थानं विवाहे अग्न्याधेयदेवताभ्यः स्थालीपाकꣳश्रपयित्वाज्यभा-**

मनसा त्यागोऽपि । इन्द्राय स्वाहा इदमिन्द्राय । आज्यभागौ आज्यभागसंज्ञकौ होमौ आग्नेयसौम्ये यथा । अग्नये स्वाहा इदमग्नये । सोमाय स्वाहा इदं सोमाय । महाव्याहृतयः भूराद्यास्तिस्रो यथा । ॐभूः स्वाहा इदमग्नये इदं भूर्वा इति त्यागः । ॐभुवः स्वाहा इदं वायवे इदं भुव इति वा । ॐस्वः स्वाहा इदं सूर्याय इदं स्व इति वा । सर्वप्रायश्चित्तम् । सर्वप्रायश्चित्तसंज्ञकाः पञ्चाहुतयः । यथा त्वन्नोऽग्ने इत्यादिमन्त्रपञ्चकं सर्वप्रायश्चित्तसंज्ञकं इति । प्राजापत्यम् प्रजापतिदेवताको होमः । यथाप्रजापतये स्वाहा इदं प्रजापतये । स्विष्टकृच्चेति स्विष्टकृद्धोमः । यथाग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । चकारः सर्वसमुच्चयार्थः इत्युपरिष्टाद्वक्ष्यति । नित्यं एतच्चतुर्दशाहुतिकं नित्यं सर्वत्र सर्वकर्मसु भवति यत्र होमोऽस्ति । यथा घृताक्तानि कुशेन्धनानि जुहुयादिति । यत्र पुनः प्रस्तरारोहणलांगलयोजनादौ होमो नास्ति तत्रैतन्न भवति । अन्ते विहितस्य स्विष्टकृद्धोमस्य कर्म्मणः स्थानान्तरमाह । प्राङ्महाव्याहृतिभ्य इति यत्राज्यव्यतिरिक्तमन्यद्धविर्भवति यज्ञादाविव तत्र महाव्याहृतिहोमात्प्राक् स्विष्टकृद्धोमः । अन्यत्र सर्वाहुत्यन्ते भवति । सर्वप्रायश्चित्तमिति । सर्वप्रायश्चित्तेति सूत्रारम्भो राष्ट्रभृदादीनामागन्तुकत्वादन्ते निवेशो माभूदिति । तेन सर्वप्रायश्चित्तं त्वन्नोऽग्ने इत्यादि पञ्चमन्त्रकं प्राजापत्यान्तहोमः । तयोरन्तरं मध्ये वक्ष्यमाणहोमस्य स्थानं विवाहे एव । अत्र पूर्वोक्तसूत्रं केषांचिन्मन्त्राणामुपयोगार्थं पठति अग्न्याधेयदेवताभ्य इति । अग्न्याधेयदेवताभ्य इति वक्तुमशक्यम् । वक्ष्यत्यग्न्याधेयदेवताभ्यो हुत्वा जुहोतीति तर्हि किमर्थमुक्तं बहुत्वविशिष्टानामत्र देवतात्वं यथा स्यादिति ।

गाविष्टाज्याहुतीर्जुहोति इति सूत्राणि निरूपितानि॥ अथ होमः । अथ ब्रह्मणान्वारब्धो जुहुयात् । तत्राघारादारभ्य द्वादशाहुतिषु दत्ताहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । प्रजापतय इति मेधातिथिऋषिः प्राजापत्यगायत्रीछंदः आज्यहोमे विनियोगः ॥१॥ ॐप्रजापतये स्वाहा इदं प्रजापतये इति मनसा । इन्द्राय स्वाहा इदमिन्द्राय इत्याघारौ । अग्नय इति प्रजामेधाऋषिः अग्निर्देवता प्राजापत्यगायत्रीछंदः आज्यहोमे विनियोगः ॥२॥ अग्नये स्वाहा इदमग्नये ॐसोमइति प्रजापतिऋषिः सोमो देवता यजु गायत्रीछंदः आज्यहोमे विनियोगः ॥ ३ ॥ सोमाय स्वाहा इदं सोमाय इत्याज्यभागौ । त्रिव्याहृतीनां प्रजापतिऋषिरग्निर्वायुः सूर्यो देवता गा-

किञ्च द्वेऽग्न्याधेयदेवते स्त एव तयोरेव देवतात्वं माभूदिति पुनर्ग्रहणाद्व-ह्नीनामेव देवतात्वम् । श्रपयित्वेति श्रपणोपदेशान्नाश्रितासादनं आज्य-भागाविष्ट्वेति किमर्थमुक्तम् । उच्यते । आघारादीनां चतुर्दशाज्याहुतीनां क्रम उक्तः तत्रेहाष्टानामानिर्दिष्टावसराणामवसरविधानार्थम् । इति विवा-हसूत्रनिरूपणम् । अथ होममन्त्रव्याख्या । तत्र प्रथममृष्यादिकं सर्वेषां निरूप्यते तज्ज्ञानस्यौपाधिकत्वात् । तत्र त्वन्नोऽग्ने इति सत्वन्नोऽग्नेऽइति द्वयोर्वामदेव ऋषिस्त्रिष्टुप् छन्दोऽग्नीवरुणौ देवते सर्वप्रायश्चित्तहोमे विनि-योगः । अयाश्चाग्नेरित्यस्य वामदेव ऋषिस्त्रिष्टुप् छंदः अग्निर्देवता सर्वप्राय-श्चित्तहोमे विनियोगः । ये ते शतमित्यस्य शुनःशेप ऋषिस्त्रिष्टुप् छ-न्दो वरुणो देवता वरुणीयपाशोन्मोके विनियोगः । इत्येतेषां सर्वप्राय-

यत्र्युष्णिगनुष्टुभः छंदांसि आज्यहोमे विनियोगः ४ ॐभूः स्वाहा इदं भूः ॐ भुवः स्वाहा इदं भुवः ॐस्वः स्वाहा इदᳪ स्वः इति महाव्याहृतयः । त्वन्नोऽग्न- इति वामदेवऋषिरग्निवरुणौ देवते त्रिष्टुप्छंदोहोमे विनियोगः ॥ ५ ॥ ॐत्वन्नोऽग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठा यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाᳪसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणा- भ्याम् ॥ १ ॥ सत्वन्नोअग्न इति वामदेवऋषिरग्नि-

श्चित्तहोमे विनियोगः । अथैतन्मन्त्रव्याख्या । तत्र त्वन्नोऽग्नेरिति । हे अग्ने त्वमस्मिन् कर्म्मणि वैगुण्यादेव वरुणस्य देवस्य हेडः क्रोधमवयासिसी- ष्ठा अपनयेत्यर्थः । हेडस्शब्दः सकारान्तः क्रोधवाचकः । हेडो हेलनमि- त्युक्तम् । "हेडः क्रोधे तमोगुणे" इत्यनेकार्थकोशे । कथंभूतस्त्वं नोऽस्मान विद्वान कर्म्मसाक्षित्वेन जानन । यद्वा नोऽस्मान्प्रमत्तान मन्दमतीनिति जानन । किञ्च न केवलं वरुणक्रोधमपनय किन्तु अस्मत इति अस्मभ्यं विश्वाद्वेषाᳪसि सर्वाणि भोग्यानि प्रमुमुग्धि प्रमोचयेत्यर्थः । अस्मत् कृतावज्ञाः क्षमयित्वाऽस्मभ्यं परमविलासजनितसुखानि प्रापयेत्यर्थः । यजिष्ठः यागेषु सर्वेभ्योऽतिशयेनोत्तमः । पुनः कीदृशः वह्नितमः सकलय- ज्ञांशभागिभ्यः स्वस्वांशप्रापणेन सातिशयः । पुनः कीदृशः । शोशुचानः उत्तरोत्तरदीप्यमानः ॥ १ ॥ सत्वन्न इति । हे अग्ने स त्वन्नोऽस्माकं अवमो भव अवितृतमो भव पालनोद्यततमो भव "अव रक्षणे" इत्यस्य अवमः । अवशब्दादतिशयेऽर्थे तमप्रत्ययः । तस्यतः छान्दसः तकारलोपे अवम इति जातम् । कथम्भूतस्त्वं ऊतिनोदिष्टः पालकत्वेन निरूपितः । ऊतियूतीति निपातनात् इति । "अव रक्षणे" "यु मिश्रणे" अनयोः ऊतियूतिप्रयोगौ अवधातोरूतीति निपाततः । सिद्धशब्दस्य तृतीयैकवचने रूपम्

वरुणौ देवते त्रिष्टुप्छंदोहोमे विनियोगः ॥ ६ ॥ ॐस त्वन्नोऽग्नेऽवमो भवोतीनेदिष्ठोऽस्या उषसो व्युष्टौ अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा । इदमग्नीवरुणाभ्याम् ॥ २ ॥ ॐअ-याश्चाग्न इति वामदेवऋषिरग्निर्देवता त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमे विनियोगः ॥ ७ ॥ अयाश्चाग्ने-स्यनभिशस्तिपाश्च सत्यमित्वमया असि अया नो

ऊतिनेति । उदिष्टः इति पृथक् पदम् । कदा अवमो भवेत्यपेक्षायामाह । अस्या उपसो व्युष्टौ आङ् मर्य्यादायां एवार्थे वा अस्या इति कोऽर्थः अस्यैव दिवसस्य अद्यतनादिवसस्यैव उपसः प्रभातस्य व्युष्टौ समाप्तौ अथवा व्युष्टाविति पञ्चम्यर्थे सप्तमी । आङ् च मर्य्यादायां तदा अस्य दिनस्य उपसो व्युष्टेः प्रभातमारभ्येत्यर्थः । न केवलमेतदेव किन्तु आगत्य नोऽस्मान सुहवः सुखाह्वानः एधि भव । आहूतः सुखेनागच्छेत्यर्थः । एधीति "अस् भुवि" इत्यस्य रूपम् । न केवलं त्वं आगच्छ किन्तु आगत्य मृडीकं सुखकरं नो वीहि अस्मत्सम्बन्धि व्रीह्यादिकं रराणः ददानः सन् वरुणं यज्ञाधिष्ठातारं अव यक्ष्व पूजयेत्यर्थः । स्वाहासहितो भव । अस्माद्विहितं स्वस्वभक्ष्यं देवोद्दिष्टं हविर्देवेभ्यः प्रापयेत्याशंसावाक्यार्थः । रराण इति 'रा दाने' इत्यस्य यङ्लुङन्तस्य शानच्प्रत्यये रूपम् ॥२॥ अया-श्चाग्नेऽस्येति । हे अग्ने त्वं अया असि न यातीत्ययाः । 'या प्रापणे' अस्मात् क्विप् अया इति सर्वत्र बाह्याभ्यन्तरेऽवस्थितः असि भवसि । यद्वा हे अग्ने त्वं अयाः जानासि सर्वामन्तर्बाहिर्वृत्तिं सर्वेषां जानासीति भावः । अया इति "इण् गतौ" इत्यस्य रूपं लुङि अस्य साधनं मन्त्रस्यार्थं विधायान्ते निरूपयिष्यामीति । किंभूतस्त्वं अनभिशस्तिपाः अभिशस्तिरभिशापो न येषां ते अनभिशस्तयः तान् अविद्यमानाभिशस्तीन् पातीति आत्मसा-

यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा इदमग्नये ॥ ३ ॥ ॐ ये ते शतमिति वामदेवऋषिर्वरुणः सविता विष्णुर्विश्वे मरुतः स्वर्का देवतास्त्रिष्टुप्छंदः सर्वप्रायश्चित्तहोमे विनियोगः ॥ ८ ॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तस्तेभिर्नो-

त्कृत्वा शोधयतीति अनभिशस्तिपा प्रायश्चित्तानुष्ठानेन कर्माऽनुष्ठानात् परिपालक इत्यर्थः । अत्र यद्यपि डान्तत्वे नाकारान्तः शब्दो भवति तथापि छन्दसि डस्च् इति सकारान्तः अनभिशस्तिपाशब्दः । किञ्च हे अग्ने यत् त्वमयाः शुभावहो विधिरसि तत्सत्यमित्सत्यमेव । 'इत्' इत्यव्ययं एवार्थे अवधारणे इति भावः । शुभावहविधिवाचकाऽयशब्दस्य ह्रस्वत्वेप्यया इति दीर्घः छान्दसः । हे अया सर्वत्रावस्थित नोऽस्माकं अयाः सुमनाः स्वाश्रयो वा भूत्वा यज्ञं वहासि वहसीत्यर्थः । हकारस्य दीर्घत्वं छान्दसम् । यद्वा यज्ञं यज्ञसम्पादितं चरुपुरोडाशादिवस्तुजातं कृपालुत्वेन देवेभ्यः सम्पादयसि तस्मान्नो भेषजं सुखजननदुःखध्वंसनरूपमपूर्वं धेहि देहीति प्रार्थना । बिभ्यत्यस्मादिति भेषः सच् प्रत्ययान्तः रोगवाचकः तं जयतीति भेषजम् तं । चकारावुत्कर्षसूचनार्थौ वहास्ययानो धेहि भेषजमिति क्रियापदद्वयं आद्यन्ते त्रिद्योतनार्थम् । प्रथममेव यत् अया इति तदिण्गतावित्यस्य लुङ् मध्यमपुरुषैकवचने इसि इति स्थिते भूते सिरिति सिच् परस्मैपदे सीति सिलोपे इणो गादेशाभावः छान्दसः धातोर्गुणः अङ्गादादावडित्यडागमः स्वरादित्वात् द्वितीयोऽडागमः । वर्णव्यत्ययः गुणस्यायादेशे अया इति गत्यर्थो ज्ञानार्थेऽपीति ज्ञानार्थः ॥३॥ ये ते शतमिति । हे वरुण ते तव ये शतं पाशाः बहुशतसंख्याकाः पाशाः ये च सहस्रसंख्याकाः पाशाः पापानि बन्धनहेतुत्वात् । किम्भूता यज्ञियाः यज्ञप्रत्यूहोत्पन्नाः । पुनः किम्भूताः । वितताः विस्तीर्णाः । पुनः

ऽद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो मरुद्भ्यः स्वर्केभ्यः ॥ ४ ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय अथावयमादित्यव्रते तवानागसोऽदितये स्याम स्वाहा इदं वरुणाय । एताः सर्वप्रायश्चित्तसंज्ञकाः ॥ ५ ॥

किम्भूताः । महान्तः कोटिशः प्रयत्नेनापि अपरिहार्याः तेभिस्तैः पाशैः पाशितान्नोऽस्मान्न अद्य अस्मिन्नेवाहनि इदानीमेव सविता मुञ्चतु मोचयतु न केवलं सवितोत विष्णुरूपेन्द्रो मुञ्चतु मोचयत्वित्यर्थः । उत विश्वेदेवा सर्वा देवता मुञ्चन्तु किञ्च मरुतो वायवो मुञ्चन्तु किञ्च स्वर्काः सुष्ठवः सुष्ठुहृदयाः अर्काः आदित्याः मुञ्चन्तु मोचयन्त्वित्यर्थः । सवित्रादयो मुञ्चन्त्विति कोऽर्थः अकरणाऽयथाकरणाऽन्यथाकरणजन्यप्रत्यवायाभिभूतान्नोऽस्मान्पावयन्त्वित्यर्थः । यद्वा स्वर्का इति विशेषणम् । किम्भूताः सावित्रादयः स्वर्काः स्वर्गगाः स्वर्चिता वा आहुतिग्रहणात्तुष्टाः सवित्रादयोऽस्मान् सर्वतः पावयन्त्विति भावः । तेभिरिति तच्छब्दस्य तृतीयाबहुवचने बहुलं छन्दसीत्यैसादेशनिषेधे बहुवचने एत्वे सति स्यादेवेत्यवसेयम् ॥ ४ ॥ उदुत्तमं वरुणेति । उत्तममध्यमाधमाः त्रिविधा हि वरुणपाशाः तत्र हे वरुण उदिति यदर्थे । हे वरुण यत्तव उत्तमं पाशमस्ति अस्मात् उत्तमात्पाशात् नोऽस्मानिति शेषः । अव रक्ष अस्माद्वारुणात्पाशादस्मान्रक्षेत्यर्थः । किञ्च अधममर्वाचीनं पाशं श्लथ स्वस्थान एव निःशेषेण उच्छ्वासितं कृत्वा निवारयेत्यर्थः । मध्यमपदेन व्यवहितोऽपि वि उपसर्गः श्लथेत्यनेन सम्बन्ध्यते तेन विश्लथ उच्छ्वासयेति भावः । अथ च मध्यमं पाशं उत्तमाधमयोरन्यत्पाशम् अप अपाकुरु श्लथ समीपे यत् अपेति पदं तस्यार्थः अपाकुर्विति ॥ कीदृशं पाशं अव्ययं अम्मयमित्यर्थः । मयट्-

प्रत्ययस्य मकारस्य वकारादेशः छान्दसः । एवं कृते सति हे आदित्य अदितेः पुत्र वरुण व्रते ब्रह्मचर्ये च वयं तव अनागसः निरपराधाः सन्तः अदितये अदीनत्वायै स्याम अदीना भवाम इत्यर्थः । दीनतायां दितिः प्रोक्ता दितिः स्याद्दैत्यमातरीति अनेकार्थः । होमकर्माणि पराशरः । आघारावाज्यभागौ च महाव्याहृतयस्तथा । सर्वप्रायश्चित्तसंज्ञा पञ्चैवाहुतयस्तथा ॥ १ ॥ प्राजापत्यं स्विष्टकृतोऽग्नेर्होमश्च सर्वतः । होमकर्म्मण्याहुतीनां चतुर्दशकमीरितम् ॥ २ ॥ सर्वतः होमकर्म्माणि सर्वत्र यत्र होमो विहितस्तत्र सर्वत्र एतदाहुतीनां चतुर्दशकमवश्यं समुदीरितमस्तीत्यर्थः ॥ ५ ॥ तत्र सूत्राणि प्रमाणयति ॥ एतन्नित्यं सर्वत्र । प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः । सर्वप्रायश्चित्तप्राजापत्यांतरमेतदवापस्थानं विवाहे । अथैषां सूत्राणामर्थं व्याख्याति । एतन्नित्यमिति । एतदाघारादिस्विष्टकृदवसानं सर्वत्र सर्वेषु होमात्मकेषु कर्म्मसु नित्यं यत्र होमाभावस्तत्र नास्ति । यथा प्रस्तरारोहणलाङ्गलयोजनपायसब्राह्मणभोजनेषु ॥ अन्ते विहितस्य स्विष्टकृद्धोमस्य कर्म्मविशेषे स्थानान्तरमाह । प्राङ्महाव्याहृतिभ्य इति महाव्याहृतिभ्यः प्राक् पूर्वं स्विष्टकृद्यागो भवति । चेद्यदि आज्यात्सकाशादन्यदपि चरुप्रभृतिहविर्भवति तथापि केवलाज्यभागे सर्वाहुतिशेषे भवति सर्वप्रायश्चित्तेति । सर्वप्रायश्चित्तं त्वन्नोऽग्ने इत्यारभ्य उदुत्तममित्यन्तमाहुतिपञ्चकं प्राजापत्यं प्राजापत्याहुतिः । सर्वप्रायश्चित्तञ्च प्राजापत्यञ्च सर्वप्रायश्चित्तप्राजापत्ये तयोरन्तरं सर्वप्रायश्चित्तप्राजापत्यान्तरं एतदवापस्थानं कस्मिन्विवाहे अवापस्थानं अवापश्च अन्यत्र विहितस्य होमस्य जपादौ कर्मणि कर्मान्तरे प्रक्षेपः तस्य स्थानं विवाहे एतत् । अवापस्य आगन्तुकत्वेन न्यायादन्ते निवेशो युक्तः । तन्निवृत्त्यर्थमेवमाह । अथ विवाहहोममप्याह सांख्यायनः । विवाहे होमयेन्नित्यं राष्ट्रभृद्वादशाहुतीः । जयाहुतीर्दश त्रींश्च होमयेत्तत्र चेच्छया ॥ अष्टादशापि जुहुयादभ्यातानाहुतीस्तथा ॥१॥ इच्छयैव तत्र सूत्रं प्रमाणयति । विवाहे एव रा-

ष्ट्रभृत इच्छञ्जयानभ्यातानांश्च जानन् येन कर्मणेत्सैदिति वचनात् ॥ सूत्रार्थं निरूपयति । विवाह एवेति । राष्ट्रभृतः राष्ट्रभृत्संज्ञकान् ऋताषाडित्यादिद्वादश मन्त्रानिच्छन्नपि विवाह एव जुहोति । जयान्मन्त्रलिङ्गाच्चित्तं च स्वाहा चित्तिश्चेत्यादि प्रजापतिजयानिंद्रायेत्याद्यन्त्यान् । जयाख्यमन्त्रांस्त्रयोदशसङ्ख्याकान शेषान अग्निर्भूतानामाधिपतिरित्यादीन् अष्टादशसङ्ख्याकान् अभ्यातानसंज्ञकान् तांश्च तांश्चेच्छयैव विवाहे संजुहोति । जानन् शब्दो विकल्पार्थः चशब्दो राष्ट्रभृद्भिः सन्नियोगार्थः । यद्वा खण्डान्वयः । विवाह एवेति । विवाह एव विवाहहोमकर्मण्येव राष्ट्रभृतः राष्ट्रभृत्संज्ञिका आहुतीरावपेदित्यध्याहारः । जयाभ्यातानांश्चेति पाठे जयाश्च अभ्यातानाश्च जयाभ्यातानास्तान् । जयाभ्यातानांश्च आवपेत् । किंकुर्वन् इच्छन राष्ट्रभृज्जयाभ्यातानैः होमफलं कामयन् । अत्र किंप्रमाणमिति । येन कर्मणेत्सैदिति । येन कर्मणा यस्मिन्कर्माणि ओप्यत्वेन यत्फलं भवतीति जानन विंदन तत्कर्मफलमिच्छन् तस्मिन्कर्म्मणि आवपेदिति श्रुतिवचनादित्यर्थः । जयाभ्यातानांश्चेच्छया जुहोतीति कुतः येन कर्म्मणा ईर्त्सेत् ऋद्धिमिच्छेत्तत्र जयान जुहुयात् इति वचनात् ततश्चान्यत्रापि ऋद्धिमिच्छता जयहोमः कार्य्यः इति गम्यते । चित्तं चेत्यत्र केचिच्चतुर्थ्यन्तेन प्रयोगमिच्छन्ति तदयुक्तम् । नह्येतानि देवतापदानि किन्तु मन्त्रा एव । मन्त्राणां च यथाम्नातानामेव प्रयोग इष्यते इति । स्वाहाकारस्त्वन्ते भवत्येव आहुतीनां स्वाहाकारप्रदानमिति श्रुतिः त्यागे तु भवत्येव चतुर्थ्यन्तम् । अमन्त्रत्वात्त्यागस्य ॥ १ ॥ अथ विवाहसाक्षिकाग्न्यर्थमाहुतित्रयं चापि कार्य्यमेव । तत्राह साङ्ख्यायनः । आहुतित्रितयं दद्याद्विवाहे साक्षिकाग्नये । साक्षीदानादिपूज्योऽतोऽग्निं साक्षिणमाहुनेत् इति ॥ १ ॥ धर्म्मं आत्मा सदा साक्षी धर्म्मो धारयते प्रजाः । अतो वैवस्वतं धर्म्ममाहुतिभ्यां प्रपूजयेत् ॥१॥ इति वचनात् । वैवस्वतायाप्याहुतिद्वयं ३ घृताभिघारितशमीपलाशमिश्रैर्लाजैर्वधूरग्नेराशंसत्येनं

जुहुयादिति श्रुतिमनुसृत्य योगियाज्ञवल्क्य आह पूर्वमग्निं साक्षीकृत्य जरां गच्छ परिधत्स्व वासः समंजन्तु विश्वेदेवाः समापो हृदयानि नौ द्यौस्त्वाददातु पृथ्वी त्वा प्रतिगृह्णात्विति कोऽदात्कस्मादादिति कामस्तु तिं यदेषि मनसा दूरं दिशोनुपवमानो वेति अघोरचक्षुरपतिघ्न्येधि शिवा-पशुभ्यः इति प्रभृतिभिर्वचनैर्वर एवाशंसावाक्यानि करोति स्म न वधूः किमपि पठितवती । व्यवहारादिषु तु उत्तमर्णाधमर्णोभयवदननि-र्मुक्तवचनैरेव व्यवहारशुद्धिर्नत्वेकमुखद्वारा व्यवहारशुद्धिरतो वधूर्निज-मुखद्वारैव मन्त्रपाठपूर्वकलाजाहोममग्नौ कुर्वती आशंसावाक्यानि जग-देतान्याभिप्रायशो निरूपयन्नेव याज्ञवल्क्यः स्मरति ॥ आघारादिसमा-रम्य होमं वैवस्वतान्तिकम् । कृत्वा वरो वा तद्धोता भवेतां प्राङ्मुखौ ततः ॥ १ ॥ वधूवरौ समुत्थाय वधूर्जुहुयाच्छ्रुतेर्बलात् । शमीपलाशमिश्रैश्च लाजैराज्याभिघारितैः ॥ २ ॥ एका देव्या रवेः सप्त सप्ताग्नेर्गणपतेस्त्रयः । च-तस्रो वासुदेवस्य शिवस्यार्धप्रदक्षिणा ॥ चतस्रः स्युः पितॄणां वै तिस्रो प्येका यदृच्छया ॥३॥ इति पद्मपुराणीयवचनात् । उक्ता वैश्वानरे सप्तप्रदक्षि-णाकर्त्तव्यता । तत्राघोरचक्षुरपतिघ्न्येधि शिवापशुभ्यः सुमनाः सुवर्चा-इत्यादिवरपठितमन्त्रान्ते परस्परनिरीक्षणानन्तरं यदुक्तं ततोऽग्निं प्रदक्षि-णीकृत्येति तत्र प्राप्तसप्तप्रदक्षिणावशात् श्रुत्यनुसारतो याज्ञवल्क्यो-क्त्यार्य्यमणं देवं कन्यामग्निमयच्छतेत्यादि प्रतिमन्त्रान् लाजाहवनपूर्व-कोक्तप्रदक्षिणात्रयानन्तरं सूर्यकोणेन लाजाहवनानन्तरं चतुर्थप्रदक्षिणातः परिशेषात्पूर्वं प्रदक्षिणात्रयं सिद्धम् । तेनाग्नेः प्रदक्षिणासप्तकमपि संजा-तमिति । प्रत्याहुतिकर्त्तव्यतायां तत्रैवापस्तम्बः प्रत्याहुतिं वरः साङ्गुष्ठं हस्तमभिगृभ्णीयात्पादेन वध्वाः अश्मारोहणं कारयेदारूढायां वरो गाथां गायेत्ततो वधूवरौ प्रणीताब्रह्मसहितमग्निं प्रदक्षिणीयातां । तत्र वरोह-वाव तुभ्यमाग्निमित्यादि ऋचं पठन्नेव वधूमनु वैश्वानरं प्रदक्षिणमाचरेत् । इति श्रुत्यनुसारतः आपस्तम्बोऽपि स्मरति । आहुत्यनन्तरं वध्वाः

साङ्गुष्ठमवलम्बयेत् । दक्षहस्तं वरो मन्त्रं पठन्नेवाभितः स्थितः ॥ १ ॥ दृषदुपले त्वपसव्येन पादेनारोहयेद्वधूम् । आरूढायाञ्च तत्रास्यां गाथां गायेत वै वरः ॥२॥ प्रदक्षिणीप्रकुर्य्यातां ज्वलनन्तु वधूवरौ । परिक्रमेत्पठन्नेव तुभ्यमग्नेस्तयोर्वरः ॥ ३ ॥ इति । दृढो दृढतरश्चैव ततो दृढतमो भवेत् इति न्यायात् । त्रिवारमेव वधूवरयोः प्रदक्षिणात्रितये एव आशंसावाक्यस्य दृढतमत्वे सति सप्तमी । प्रदक्षिणायाः पूर्वमेव सूर्य्यकोणेन तूष्णीं भगाय स्वाहेति पारस्करवचनात् । लाजाहोमं वधूः कुर्य्यादिति श्रुतिसूत्रानुसारेण सप्तम्यां परिक्रमायां न मन्त्रपाठः । नास्यामङ्गुष्ठग्रहणं नाश्मारोहणं न गाथागानं कुर्य्यात् । प्रदक्षिणासंख्यासम्पूर्णाय तूष्णीमेव परिक्रमेदिति । अत एव षष्ठीपरिक्रमानन्तरमासनविपर्य्ययेण वधूवरयोरासनयोः समुपवेशनम् । अग्नेः प्रदक्षिणाः सप्त विवाहे तु सदा मताः । सर्वत्र युगपत्कुर्य्याद्विवाहे तु यथाक्रमम् ॥ १ ॥ होमात्पूर्वन्तु स्युस्तिस्रस्तिस्रो होमे समन्त्रकाः । ततो भगाय स्वाहेति हुत्वा तूष्णीं प्रदक्षिणा ॥२॥ वरः पश्चाद्वधूरग्रे पूर्वासु मध्यमास्वपि । प्रदक्षिणायामन्त्यायां वधूः पश्चात्पुरोवरः ॥३॥ इतिहरिहरसंवर्तपराशरवचनात् यथायथमूह्यम् । अथ सप्तपरिक्रमणानन्तरमुपविश्य वरः प्राजापत्यं जुहुयात् । ॐ प्रजापतये स्वाहा इदं प्रजापतये इति मनसा । अयमभिप्रायः । वध्वा स्वयमाशंसावाक्ये समुच्चारिते प्रसन्नमना वरो धन्योऽयं विधाता येन भार्य्यया मे संयोगो विहितः इति प्रजापतेः प्रसादं ज्ञात्वा प्रजापतिं जुहावेति मनसा सुप्रसन्नेन मनसेत्यर्थः ॥ मैत्री सप्तपदी प्रोक्ता सप्तवाक्याथवा भवेत् ॥ सत्तराणां तु त्रिपदी सत्तमानां पदेपदे ॥ १ ॥ इति ऋषिप्रणीतत्वात् । मैत्रीकरणाय सप्तपदीक्रमणं वरः कुर्य्यात् । अन्योन्यभावनिबन्धनहेतुर्मैत्रीति मैत्रीलक्षणत्वात् । तत्र मन्त्राणि वाक्यप्रतिवाक्यात्मकानि वक्ष्यमाणानि ज्ञातव्यानीति । अथ वरो वधूमात्मीयां मत्वा आपः शिवाः शिवतमाः इत्यादिमन्त्रैरभिषिञ्चति । ततो निजां तामभिज्ञाय इयं मे चाज्ञा-

करी नवेति परीक्षणाय तामाज्ञापयति वरः सूर्य्यमुदीक्षस्वेति । तस्यां सूर्य्यमुदीक्षितवत्यां सत्यां तच्चक्षुरिति स्तुतिमन्त्रं स्वयं पठति । अस्तमिते सूर्य्ये ध्रुवमुदीक्षस्वेति आज्ञापनम् । तत्र ध्रुवस्तुतिमन्त्रपठनं वरः कुर्य्यात् । अथात्मीयस्वरूपभूतां तां ज्ञात्वा सर्वेषां पुरस्तात्तस्या हृदयं वक्ष्यमाणममव्रतेत्यादिमन्त्रेण स्पृशति । अथ पारस्करवचनेन वधूमभिमन्त्रयति वरः सुमङ्गलीरिति मन्त्रेण । सर्वान्ते स्विष्टकृद्धोमं कुर्यात् । विधिसमाप्तये यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैरिति श्रुतिनोदनाबलात्संस्रवप्राशनम् । तदन्वाचारादाचमनप्राप्तिः । संस्रवं प्राशयित्वा वा आचामेत्प्रयतोऽपि सन्निति वाक्यादाचमनम् । एवं हतं यज्ञमदक्षिणमिति वचनात् । ब्रह्मणे दक्षिणादानम् । आमतण्डुलसंपूर्णं पूर्णपात्रं ददेद्वरः । अष्टमुष्टिर्भवेत्कुञ्चस्ते[1] चेदष्टौ तु पुष्कलम् ॥१॥ पुष्कलानि तु चत्वारि पूर्णपात्रं प्रचक्षते। ब्रह्मणे दक्षिणां दत्वा ब्रह्मग्रन्थिविमोचनम् ॥२॥ इति कात्यायनवचनात् ब्रह्मग्रन्थिविमोकः । ततः प्रणीतामादाय तत्स्थं जलं मूर्ध्नि प्रक्षिपेत् । सुमित्रियेति मनुना ततो दुर्मित्रियेति च । पठित्वेशदिशायान्तु न्युब्जीकुर्य्यात्ततो वरः । ततः पूर्णाहुतिं कृत्वा त्र्यायुषन्तु समाचरेत् ॥ १ ॥ शणशङ्खसुवर्णाद्यैः सिन्दूरं शिरसि क्षिपेत् । बध्वा वरो द्वयोः पश्चादक्षतारोपणं भवेत् ॥ २ ॥ ततो वधूं वरोऽन्यो वा वेदितो मण्डलं नयेत् । इह गाव इति मन्त्रेण लोहितानडुच्चर्माणि ॥ इति विवाहविधिसूत्रणं समाप्तम् ॥ प्रासङ्गिकं समाप्य प्रस्तुतं मन्त्रार्थं पुनराह तत्र राष्ट्रभृत्संज्ञकान् द्वादश मन्त्रान विवाहहोमे पारस्करविहितान व्याख्याति । ऋताषाडिति । योऽग्निर्गन्धर्वरूपः । तस्मै अग्नये स्वाहा वाट् यत् स्वाहा कृतं सुहुतं तत् वाट् वषट् भवत्वित्यर्थः । वहतीति वाट् प्राप्नोतीत्यर्थः । अग्निः किम्भूतः ऋताषाट् ऋतं सत्यं आसहते यः सः ऋताषाट् । पुनः किम्भूतः ऋतधामा । ऋतं सत्यं धाम स्थानं यस्य

---

[1] किञ्चित्किञ्चिदष्टौ तु पुष्कलम् ।

ततोऽन्वारम्भंविना राष्ट्रभृद्धोमः पारस्करवचनात् । तत्र द्वादश मन्त्रा यथा ॐऋताषाडिति प्रजापतिर्ऋषिः साध्या वा सर्वराष्ट्रभृतः ऋषयः ऋताषाड्ऋतधामाग्निर्गंधर्वो देवता यजुः होमे विनियोगः । ऋताषाड् ऋतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहावाट् ॥१॥ इदमृताषाहे ऋतधाम्नेऽग्नये गन्धर्वाय॥१॥ॐपुनः ऋताषाडिति प्रजापतिर्ऋषिः ओषधयोप्सरसो मुदो देवता यजुःहोमे विनियोगः। ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा ॥ २ ॥ इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यः ॥ २ ॥ ॐ॰ संहितइति प्रजापतिऋषिः सꣳहितो विश्वसामासूर्यो गंधर्वो देवता आर्चिबृहतीछंदो यजुः होमे विनियोगः संहितो विश्वासामा सूर्य्यो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्॥३॥इदꣳसं-

सः ऋतस्थानायाऽस्माभिरिदमाज्यं दत्तं किमर्थं तस्मै स्वाहा क्रियत इत्याह । स न इदं ब्रह्म ज्ञानं क्षत्रं वीर्य्यञ्च पातु रक्षत्वित्याशंसावाक्यार्थः ॥ १ ॥ ऋताषाडिति यो गन्धर्वरूपोऽग्निः ऋताषाड् ऋतधामाग्निः तस्य गन्धर्वरूपस्याग्नेरप्सरस ओषधयो व्रीह्यादयः कार्षिकार्था यवगोधूममाषव्रीहिमुद्गादयः । किंभूताः ओषधयः । मुदः मुदोनाम्न्यः सर्वे मोदन्ते याभिस्ता मुदः ताभ्यः स्वाहा सुहुतं भवतु गन्धर्वरूपस्याग्नेर्मुदनाम्नीभ्योऽप्सरोभ्य ओषधीभ्य इदमाज्यमस्माभिर्दत्तं ता अस्माकं ज्ञानं वीर्य्यं च रक्षन्त्विति आशंसावाक्यार्थः ॥ २ ॥ सꣳहितेति यः सूर्य्यः गन्धर्वः किंभूतः संहितः दिवसं रात्रिं च सन्दधातीति संहितः सम्पूर्वो दधातिः

हिताय विश्वसाम्ने सूर्य्याय गन्धर्वाय।३।पुनः सꣳहितइ-
ति प्रजापतिर्ऋषिः मरीचयोप्सरसआयुवो देवता यजुः
होमे विनियोगः सꣳहितो विश्वसामा सूर्य्यो गन्धर्वस्त-
स्य मरीचयोऽप्सरसः आयुवो नाम ताभ्यः स्वाहा॥४॥
इदं मरीचिभ्योऽप्सरोभ्य आयुवोभ्यः ॥४॥ ॐसुष्मण
इति प्रजापतिर्ऋषिः सुष्मणः सूर्यरश्मिश्चंद्रमागंधर्वोदे-
वता प्राजापत्यस्त्रिष्टुप्छंदो यजुः होमे विनियोगःॐसु
षुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः स नो ब्रह्म क्षत्रं
पातु तस्मै स्वाहावाट् ॥५॥ इदं सुषुम्णाय सूर्य्यरश्मये
चन्द्रमसे गन्धर्वाय ॥ ५ ॥ पुनः सुष्मण इति प्रजाप-
तिर्ऋषिः नक्षत्राण्यप्सरसो भेकुरीयो देवता यजुः हो-
मे विनियोगः सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वस्त-
स्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वा-

क्तान्तः दधातेर्हिरिति हिरादेशः । समो वा हिततयोरिति मलोपस्तत्पक्षे सहितः पुनः किम्भूतः विश्वसामा विश्वं सर्वं साम यत्र सः समस्तसाम-वेदमयः परं सर्वं समानम् ॥ ३ ॥ सꣳहित इति तस्य सूर्य्यस्य गन्धर्व-स्याप्सरसो मरीचयो रश्मयः आयुवो नाम आयुवो नाम्न्यः आयुवो मिल-नवृत्तयः आसमन्ताद्युवन्ति आयुवः आङ्पूर्वको यु मिश्रणे कसिप्रत्य-यान्तोऽन्यत्समानम् ॥ ४ ॥ सुषुम्ण इति । यश्चन्द्रमा गन्धर्वरूपः सुषुम्णः नितरामाह्लादकः सुपूर्वस्य " षुम् आह्लादने " इत्यस्य णप्रत्ययान्तः सु-तरां सोमयति अमृतजीवनदातृत्वेन आह्लादयाति विश्वमिति सुषुम्णः सूर्यरश्मिः सूर्यरश्मिभिः संसिद्धः सूर्यप्रतिबिम्बत्वात् सूर्यरश्मिस्वरूपः अपरं समानम् ॥ ५ ॥ सुषुम्ण इति । तस्य गन्धर्वरूपस्य चन्द्रमसो नक्ष-

हा ॥ ६ ॥ इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः ॥ ६ ॥ ॐ इषर इति प्रजापतिर्ऋषिः इषरो विश्वव्यचा वातो गंधर्वो देवता आर्चिर्बृहतीछंदो यजुः होमे-विनियोगः ॥ इषरो विश्वव्यचा वातो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ७ ॥ इदमिषराय विश्वव्यचसे वाताय गन्धर्वाय ॥७॥ पुनः ॐ इषरइति प्रजापतिर्ऋषिः साध्या वा अप्सरसो देवता यजुः होमे विनियोगः ॥ इषरो विश्वव्यचा वातो गन्धर्वः तस्यापोऽप्सरस ऊर्ज्जोनाम ताभ्यः स्वाहा ॥ ८ ॥ इदमद्भ्योऽप्सरोभ्य ऊर्भ्यः ॥ ८ ॥ ॐभुज्युरित्यस्य प्रजापतिर्ऋषिर्गायत्री छंदो गंधर्वो देवता यजुः होमे विनियोगः ॥ भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं ब्रह्म

त्राण्यप्सरसः किम्भूताः भेकुरयो नाम भेकुरिनाम्न्यः भनाम्न्यः इकुरिनाम्न्यश्च याः सोदर्य्यः सत्यः एकभर्तृका भवन्ति ता इकुरिशब्दवाच्याः सपितृका एकपतिका इकुर्यस्ता उदीरिताः इति गङ्गाधरवचनात् । अन्यत्समानम् ॥ ६ ॥ इषरो विश्वव्यचा इति । यो वातो गन्धर्वः किम्भूतः इषरः गमनस्वभावः 'इष गतौ' इत्यस्य अरक्प्रत्ययान्तः । पुनः किंभूतः । विश्वव्यचाः सर्वगतः विश्वं सर्वं विशेषेण अञ्चतीति विश्वव्यचाः विश्वकर्मकविपूर्वकाऽञ्चुगतिपूजनयोरित्यस्यासुप्रत्ययान्तः । परं समानम् ॥ ७ ॥ इषरो विश्वव्यचा इति । यो वातो गन्धर्वः तस्यापो जलान्यप्सरसः किंभूता ऊर्ज्जोनाम ऊर्ज्जोनाम्न्यः। सर्वसम्पादकं तूर्ज्जं ऊर्ज्जः परमपावनम् । ऊर्ज्जः कार्तिकको मासः इति रन्तिकोशोक्तिः ॥ ८ ॥ भुज्युः सुपर्ण इति यो यज्ञो गन्धर्वः । किंभूतः । भुज्युः पालकः भुनक्ति पालयतीति

क्षत्रं पातु तस्मै स्वाहा वाट् ॥९॥ इदं भुज्यवे सुप-
र्णाय यज्ञाय गन्धर्वाय ॥ ९ ॥ पुनः ॐ भुज्युरिति
साम्न्यनुष्टुप् छंद अप्सरसो देवता यजुः होमे विनि-
योगः ॥ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अ-
प्सरसः स्तावा नाम ताभ्यः स्वाहा ॥ १०॥ इदं दक्षि-
णाभ्योऽप्सरोभ्यः स्तावाभ्यः ॥१०॥ ॐ प्रजापतिरि-
ति प्रजापतिर्ऋषिः साम्नीजगती छंदो गंधर्वो देवता
यजुः होमे विनियोगः॥ प्रजापतिर्विश्वकर्मा मनो गन्ध-
र्वः स न इदं० ॥ ११ ॥ इदं प्रजापतये विश्वकर्मणे मन-
से गन्धर्वाय ॥ ११ ॥ पुनः प्रजापतिरिति आर्चिगा-
यत्रीछंदः अप्सरसो देवता यजुः होमे विनियोगः ॥
प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्य-

भुज्युः भुजपालनाभ्यवहारयोरित्यस्य युप्रत्ययान्तः शब्दः । पुनः किंभूतः । सुपर्णः शोभनपर्णः शोभनगतिः । "पॄणगतौ" इत्यस्य धातोः पर्ण इति । परं समानम् ॥ ९ ॥ भुज्युः सुपर्ण इति यो यज्ञो गन्धर्वस्तस्याप्सरसो दक्षिणा । किंभूता अप्सरसः । स्तावानाम्न्यः यज्ञस्य स्तुतियोग्यकराः स्तावाः दक्षिणायां दत्तायां यज्ञः स्तोतव्यो भवतीत्यभिप्रायः । अपरं समानम् ॥१०॥ प्रजापतिरिति । यन्मनो गन्धर्वः प्रजापतिः प्रजानामीश्वरः । किंभूतः । विश्वकर्म्मा विश्वं कर्म्म यस्य तद्व्यापारेण विश्वनिर्माणात् । अन्यत् समानम् ॥ ११ ॥ प्रजापतिरिति । यन्मनो गन्धर्वः तस्य मनो गन्धर्वस्याप्सरसः ऋक्सामानि ऋचः ऋग्वेदीयाः सामानि च सामवेदीयाः मन्त्राः । कीदृश्यः । एष्टयो नाम आतिशयितेच्छा नाम आ अतिशयिता या इष्टय इच्छास्ता एष्टयः । पुत्रादितीव्रेच्छया यागादिप्रसक्तौ पुत्रादिः सम्पद्यते इत्यभिप्रायः ।

प्सरस एष्टयो नाम ताभ्यः स्वाहा ॥ १२ ॥ इदमृक्सामभ्योऽप्सरोभ्य एष्टिभ्यः।इति राष्ट्रभृत् ॥ १२ ॥ ॐ चित्तं च स्वाहा इदं चित्ताय ॥१॥ ॐ चित्तिश्च स्वाहा इदं चित्त्यै ॥२॥ ॐ आकूतञ्च स्वाहा इदमाकूताय ॥३॥ ॐ आकूतिश्च स्वाहा इदमाकूत्यै ।४। ॐ विज्ञानञ्च स्वाहा इदं विज्ञानाय । ५ । ॐ विज्ञातिश्च स्वाहा इदं विज्ञात्यै । ६ । ॐ मनसश्च स्वाहा इदं मनसे । ७ । ॐ शक्वर्य्यश्च स्वाहा इदं शक्वरीभ्यः । ८ । ॐ दर्शश्च स्वाहा इदं दर्शाय ।९। ॐ पौर्णमासं च स्वाहा इदं पौर्णमासाय । १० । ॐ बृहच्च स्वाहा इदं बृहते ।११। ॐ रथन्तरं च स्वाहा इदं रथन्तराय । १२। ॐ प्रजापतिर्जयानि-

परं समानम् ॥ १२ ॥ चित्तमित्यादित्रयोदशमन्त्राणां परमेष्ठी ऋषिस्त्रिष्टुप्छन्दो यजुर्लिङ्गोक्ता देवता जपे होमे विनियोगः । अथ विजयसंज्ञकास्त्रयोदश मन्त्राः यथा तथा दर्शयति । प्रजापतिर्जयानिंद्रायेत्याद्यन्तेन मन्त्रेण । प्रजापतिरिन्द्राय जयान् दत्तवान् इति याऽऽशंसा भविष्यति तस्याः सर्वत्रैव मन्त्रेषु मह्यं प्रजापतिर्जयं ददात्वित्याशंसाऽऽकर्षणेन समुचिता । चित्तमिति । चित्तं ज्ञानं मह्यं प्रजापतिर्ददात्विति शेषः । एवं सर्वत्र उह्यम् ॥ १ ॥ चित्तिरिति । चित्तिर्ज्ञेयम् । प्रजापतिर्ददातु मह्यमिति ॥ ॥ २ ॥ आकूतमाभिमुख्यम् ॥ ३ ॥ आकूतिरात्मनो धर्मविशेषः येन मनः प्रेर्यते ॥ ४ ॥ विज्ञानं शिल्पादिज्ञानम् ॥५॥ विज्ञातिस्तद्विषयो विज्ञातार्थः भूषणवस्त्रपात्रादिरचना ॥६॥ मनः प्रसिद्धम् ॥ ७ ॥ शक्वरी स्थूलदृष्टिरिति प्रसिद्धा । तथा च स्थूलभूतब्रह्माण्डविराड्विषया दृष्टिस्ताः ॥ ८ ॥ दर्शः पौर्णमासश्च यागविशेषौ ॥ ९ ॥ १० ॥ बृहद्रथन्तरञ्च सामविशेषे

न्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु तस्मैं विशः समनमन्त सर्वाः स उग्रः सहव्यो बभूव स्वाहा ॥ १३ ॥ इदं प्रजापतये ।१३। इति जयाहोमः ॥ अथाभ्यातानहोमः। ॐ अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्यां स्वाहा ॥ १ ॥ इदमग्नये भूतानामधिपत-

वेदवचने तन्निरूपितधर्मविशेषौ वा ॥ ११ ॥ १२ ॥ प्रजापतिर्जयानिति । प्रजापतिरीश्वरः इन्द्राय देवराजाय जयान्पूर्वोक्तान् ज्ञानाधारादीन मन्त्रान प्रायच्छत दत्तवान् । किंभूताय इन्द्राय वृष्णे "वृष वृष्टौ" वर्षतीति वृषा तस्मै । अन प्रत्ययान्तो वृषनशब्दः यूषनवत् । किंभूतः प्रजापतिः । पृतनाजयेषु पृतनां जयन्तीति पृतनाजयाः शत्रुसेनापारगाः शूराः तेषु उग्रः विपक्षतेजोभिभावी स प्रजापतिर्जयदानपात्रीभूत इन्द्रस्तद्दत्तजयेनैव उग्रो बभूव । विपक्षपृतनाभिभावी बभूव । तथा च इन्द्रो हव्यो बभूव यज्ञबलिभागग्रणीर्बभूव । सर्वाः संविशः समस्ताः प्रजाः । छान्दसः प्रयोगः । तस्मै इन्द्राय समनमन्त प्रणतीरकुर्वन् यज्जयदानेन इन्द्र एतद्गुणविशिष्टो बभूव स प्रजापतिर्दानशीलोऽतो मह्यमपि तज्जयं ददात्विति तात्पर्यम् । एवं प्रजापतिं स्तुत्वा आहुतिं ददाति स्वाहा प्रजापतये सुहुतं भवेदित्यर्थः ॥ १३ ॥ इति जयाहोमः । अथ पारस्करप्रणीताभ्यातानसंज्ञका मन्त्रा यथा तथा दर्शयति । अग्निर्भूतानामधिपतिरिति योऽग्निर्भूतानां प्राणिनामधिपतिः प्रभुः स मामवतु प्रतिपालयतु । अधिपतेः पालनमेव समुचितम् । कुत्र मामवतु प्रतिपालयतु । अस्मिन्ब्रह्मणि वेदाध्ययनादिकर्म्माणि अस्मिन् क्षत्रे वीर्य्यसाध्ये कर्म्मणि अस्यामाशिषि आशास्येऽभ्युदयेऽर्थे अस्यां पुरोधायां पुरः स्थितायास्मिन्कर्म्मणि विवाहकर्म्मणि अस्यां देवहूत्यां देवाह्वाने । हूतिराकारणाह्वानमित्यमरः ।

ये ॥ १ ॥ ॐ इन्द्रो ज्येष्ठानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्यां स्वाहा ॥ २ ॥ इदमिन्द्राय ज्येष्ठानामधिपतये ॥ २ ॥ ॐ यमः पृथिव्या अधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याᳫं स्वाहा ॥ ३ ॥ इदं यमाय पृथिव्या अधिपतये ॥ ३ ॥

प्राणिनामधिपतिरग्निरस्मिन् विवाहकर्म्मणि इत्युपलक्षणम् । सर्वस्मिन्कर्मणीत्यर्थः । अस्यां पुरोधायामिति पदेन सर्वकर्म्मसु ममानया सम्बन्धः । सर्ववेदोक्तवीर्यकर्मसु कर्मसु चाभ्युदयेऽर्थे च देवाह्वानादौ च अनया सह मां पालयत्वित्याशंसावाक्यार्थः । तस्मै स्वाहा वाट् तस्मै अग्नये स्वाहा दत्तमाहुतिविशेषं वाट् सुहुतं भवत्वित्यर्थः ॥ १ ॥ अग्निर्भूतानामित्यष्टादश मन्त्रा अभ्यातानसंज्ञाः । तथा च श्रुतिः । यद्देवा अभ्यातानैरसुरानभ्यातन्वत । अस्या अर्थः । यद्यस्माद्देवा अभ्यातानैर्मन्त्रैरसुरान् यज्ञमानभ्यातन्वत आयुधानि प्राहितवन्तः घातयन्तिस्मेत्यर्थः । एतद्देवाभ्यातानानामभ्यातानत्वमिति । अयं च वाक्यार्थः उपरिष्टादपि सप्तदशसु मन्त्रेषु सम्बध्यते किञ्चित्किञ्चिद्विशेषः स च निरूपयिष्यते इति भावः । अथ विनियोगः । अग्निर्भूतानामित्यष्टादशानां मन्त्राणां प्रजापतिर्ऋषिः पंक्तिश्छन्दो लिङ्गोक्ता देवता अभ्यातानहोमे विनियोगः ॥ इन्द्रो ज्येष्ठानामिति । इन्द्रो मघवा ज्येष्ठानामधिपतिः अतिशयेन वृद्धो ज्येष्ठः इन्द्रस्य बृहस्पत्यादिनियन्तृत्वादधिपतित्वमस्त्येव । अन्यत्सर्वं समानम् ॥ २ ॥ यमः पृथिव्या अधिपतिः पृथ्वीवर्तिसर्वजननियन्तृत्वादाधिपतित्वम् । यमस्य पृथिव्या अधिपतित्वं अस्त्येव अन्यत्समानम् । अत्रेति अत्र आहुतिप्रक्षेपे कृते प्रणीतोदकस्पर्शः प्रणीतोदकेन स्पर्शः प्रक्षालनमित्यर्थः । कस्य स्पर्श इत्यपे-

अत्र प्रणीतोदकस्पर्शः । ॐवायुरन्तरिक्षस्याधिपतिः स मा० ॥ ४ ॥ इदं वायवेऽन्तरिक्षस्याधिपतये ॥ ४ ॥ ॐ सूर्य्यो दिवा अधिपतिः स मा० ॥ ५ ॥ इदं सूर्य्याय दिवा अधिपतये ॥ ५ ॥ ॐ चन्द्रमा नक्षत्राणामधिपतिः स मा० ॥ ६ ॥ इदं चन्द्रमसे नक्षत्राणामधिपतये ॥ ६ ॥ ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्या ँ स्वाहा ॥ ७ ॥ इदं बृहस्पतये ब्रह्मणोऽधिपतये ॥ ७ ॥ ॐ

क्षायामाह । हुत्वाहुतिं च क्रूराय होता होमे विवाहके । तत् क्रूरता घातपूर्वं शांतिमाङ्गल्यसिद्धये । दक्षहस्ताङ्गुलीः पञ्च स्रुवं त्यक्त्वा संमार्जयेत् ॥१॥ तत्र विधिः । अंभोजमुकुलाकारं दक्षहस्तं निमज्जयेत् । प्रणीताप्सु सुशान्त्यर्थं मनुः स्वायम्भुवोऽब्रवीत् ॥१॥ इत्यग्निपुराणीयवचनात् । यमो रुद्रश्च पितरः कालो मृत्युश्च पञ्चमः । पञ्च क्रूरा विवाहस्य होमे तच्छान्तिमाचरेत् ॥ १ ॥ प्रणीताद्भिः संहताङ्गुलिक्षालनेनेति शेषः । इत्यगस्त्यस्मृतेरिति ॥ ३ ॥ वायुरन्तरिक्षस्येति सम्पुटभूतयोः ब्रह्माण्डकटाहयोः कयोश्चिन्मध्यगतमवकाशमन्तरिक्षम् ततश्च ब्रह्माण्डान्तर्गतमाकाशमन्तरिक्षं सिद्धम् । नभोऽन्तरिक्षं गगनमित्यमरः । वायुरन्तरिक्षस्याधिपतिरिति । अन्तरिक्षेसदागतिमत्वाद्वायोरन्तरिक्षस्याधिपतित्वमुचितमेवास्ति । अन्यत्समानम् ॥ ४ ॥ सूर्यो दिवा अधिपतिरिति । सर्वेषां ज्योतिषां तिरस्कारेण स्वयंप्रकाशमानत्वात् सूर्यस्य दिवा एवाधिपतित्वम् । रात्रावस्तमनेन प्रकाशाभावात् ॥ ५ ॥ चन्द्रमा नक्षत्राणामधिपतिरिति । अश्विन्याद्या दाक्षायण्यश्चन्द्रमसः पत्न्यः तासामधिपतिरिन्दुः । पत्युः पत्नीनामधिपतित्वं निर्वादमेव ॥ ६ ॥ बृहस्पतिर्ब्रह्मणोऽधिपतिरिति । रुद्रशिष्यत्वेनापारशब्दवा-

मित्रः सत्यानामधिपतिः स मा० ॥ ८॥ इदं मित्राय सत्यानामधिपतये ॥ ८ ॥ ॐ वरुणोऽपामधिपतिः स मा० ॥ ९ ॥ इदं वरुणाय अपामधिपतये ॥ ९ ॥ ॐसमुद्रः स्रोत्यानामधिपतिः स मा० ॥१०॥ इदं समुद्राय स्रोत्यानामधिपतये॥ १० ॥ ॐअन्नं साम्राज्यानामधिपतिः स मा०॥११॥ इदमन्नाय साम्राज्यानामधिपतये ॥ ११ ॥ ॐसोमः औषधीनामधिपतिः स मा० ॥ १२ ॥ इदं सोमाय औषधीनामधिपतये ॥ १२ ॥ ॐसविता प्रसवानामधिपतिः स मावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहू-

रिधिविज्ञानात् शुद्धशब्दसमीचीनसंस्कृतोच्चारणविधानात् ब्रह्मणो वेदस्याधिपतित्वमुचितम् ॥ ७ ॥ मित्रः सत्यनामाधिपतिरिति । मित्रत्वं जायते सत्यात्सत्यादेव प्रवर्धते । सत्यात्प्रफलते नित्यं सत्यहेतुर्हि मित्रतेति सामान्यवचनात् । मित्रो देवताऽपि मित्रस्य तेजसा प्रकाशमानानां सत्स्वरूपाणां भावत्वेन निर्दिष्टानां पदार्थानामेवाधिपतिरिति तात्पर्य्यार्थः ॥ ८ ॥ एवमेव विधात्रा स्वयमभिषेककरणादपामधिपतित्वमुचितम् । यदुक्तम् । जलानां जलजन्तूनां पाशी धात्राधिपः कृतः इति ॥९॥ यान्यूर्द्ध्वदेशादधोऽधो गच्छन्ति तानि स्रोतांसि यानि गमनादिरहितानि गंभीराणि सरांसि स्थितान्येव सर्वदा समुल्लसन्ति तानि स्रोत्यानि तेषां समुद्रोऽधिपतिर्निर्दिष्टः सर्वेभ्यः स्रोतोभ्यः तस्य तद्रूपेण महत्त्वात् ॥ १० ॥ अन्नं साम्राज्यानामिति । साम्राज्यानां समस्तानां गजहयालयोद्यानादिसमृद्धीनामन्नस्यैवाधिपतित्वम् । अद्यते इत्यन्नं भोगः तस्यैवाधिपतित्वमिति वा ॥ ११ ॥ सोम औषधीनामधिपतिरिति । स्पष्टम् ॥१२॥ सवितेति । प्रसवानामुत्पद्यमानानां सविता श्रीसूर्यः उत्पादक-

त्यां स्वाहा ॥ १३ ॥ इदं सवित्रे प्रसवानामधिपतये ॥ १३ ॥ ॐरुद्रः पशूनामधिपतिः स मा० ॥ १४ ॥ इदं रुद्राय पशूनामधिपतये ॥ १४ ॥ अत्र प्रणीतोदकस्पर्शः ॥ ॐत्वष्टा रूपाणामधिपतिः स मा ॥ १५ ॥ इदं त्वष्ट्रे रूपाणामधिपतये ॥ १५ ॥ ॐ विष्णुः पर्वतानामधिपतिः स मा० ॥१६॥ इदं विष्णवे पर्वतानामधिपतये ॥ १६ ॥ ॐमरुतो गणानामधिपतयः स मा० ॥१७॥ इदं मरुद्भ्यो गणानामधिपतिभ्यः ॥१७॥ ॐपितरः पितामहाः परेऽवरे ततास्ततामहा इह मावन्त्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्म्मण्यस्यां देवहूत्याᳫं स्वाहा ॥१८॥ इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यः ॥१८॥ अत्र प्रणीतोदकस्पर्शः । इत्य-

एवाधिपतिरित्यर्थः ॥ १३ ॥ रुद्रः पशूनामिति कामधेनोर्जठरान्नन्दिकेश्वररूपेणावतीर्णस्य रुद्रस्य पशूनामधिपतित्वम् ॥१४॥ त्वष्टा रूपाणामिति । रूपाणां मूर्तीनामुत्पादकत्वेन त्वष्टा विश्वकर्माधिपतिः समुचितः ॥ १५ ॥ विष्णुः पर्वतानामित्यपि पर्वाणि पुण्यपुञ्जसम्बध्यमानानि यानि कुहूसिनीवालीव्यतीपातप्रभृतीनि विद्यन्ते येषां ते पर्वताः दर्शपौर्णमासप्रभृतयो यज्ञास्तेषामधिपतिरधीश्वरो विष्णुर्यज्ञपुरुष एव समुचितः । यज्ञभुग्यज्ञकृद्यज्ञी यज्ञात्मा तदधीश्वरः इति व्यासस्मृतेः ॥ १६ ॥ मरुतो गणानामधिपतय इति । गणानां आदित्या विश्वेदेवा वसुतुषिताऽभासुरमहाराजकसाध्या रुद्राणां ये गणास्तेषां सर्वेषां मरुतो वाता अधिपतयोऽतिबलीयस्त्वात्तेषामधिपतित्वमुचितम् ॥ १७ ॥ पितरः पितामहा इति । ये परा मुख्या हरिवंशे मार्कण्डेयाय

भ्याताननामकहोमः । अथाज्यहोमः । अग्निरेतु प्रथमो देवताना᳟सोस्यै प्रजां मुञ्चतु मृत्युपाशात् तदपा᳟राजा वरुणोऽनुमन्यतां यथेय᳟स्त्री पौत्रमघं न रोत्तात् स्वाहा इदमग्नये ॥ १ ॥ ॐइमामग्निस्त्राय-

श्रीसनत्कुमारेण निरूपितास्तेन च भीष्माय कथिता देवानामृषीणामङ्गिरसां भार्गवाणां ब्राह्मणानां क्षत्रियाणां विशां शूद्राणां च पितरः पितृगणाः पितामहास्तेषां च पितरः परे तेषामपि पितरः अथवा परे मुख्याः सर्वेषां पितृत्वात् । एतेन दिव्यपितॄणां निरूपणम् । अथात्मपितॄन् कथयति । अवरे आधुनिका येऽस्मद्गोत्रिणः तता इति कोऽर्थः ताताः पितरः तथा ततामहाः पितामहाः परे तेषां पूर्वाः प्रपितामहा इत्यर्थः । परे इति पदस्य तन्त्रं ते मा मामवन्तु । अन्यत्समानम् ॥ १८ ॥ ततोऽग्निरेत्वित्यादिपरं मृत्यन्तैश्च पञ्चमन्त्रैः होमः कार्यः । तत्र विनियोगः । तत्राग्निरेत्वित्यादिचतुर्णां प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो लिङ्गोक्ता देवता आज्यहोमे विनियोगः । अग्निरेत्विति । अग्निरेतु आगच्छतु । कीदृशोऽग्निः देवतानां यज्ञभुजां इन्द्रादीनां प्रथम आद्यः सर्वदेवमुख्यत्वेन प्रधानत्वात् । सचाग्निरस्यै अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु । कुतो मृत्युपाशात् मृत्योः पाशान्मरणात् । मृत्युपाशस्तु मरणं निधनम्मृत्युरित्यपीति हलायुधः । अस्यै इति षष्ठ्यर्थे चतुर्थी । यद्वा मृत्युपाशादिति प्रथमा अग्नेर्विशेषणम् तथा चेत्थं मन्त्रस्यार्थः । मृत्युपाशमत्ति भस्मसात्करोतीति मृत्युपाशात् मृत्युभयाभावसूचकोऽग्निः अस्यै कन्यायै प्रजां मुञ्चतु ददात्वित्यर्थः । "मुचि दान" इत्यस्य रूपम् । जाठरोऽग्निर्मृत्युभयाभावसूचक इति प्रसिद्धम् । तदुक्तं वैद्यतन्त्रचिन्तामणौ । जठरे तु भवेद्यावत्प्रचण्डोऽग्निः क्षुधातुरः । तावन्मृत्युभयन्नैवान्तिके सत्यपि प्राणिनाम ॥ विनश्यन्ति क्षुधाहान्या जाठराग्निक्षये सतीति । तच्च प्रजामोचनं

**तां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा इदमग्नये ॥ २ ॥ स्वस्तिनोऽग्ने दि-**

वरुणो राजाऽनुमन्यताम् अनुजानातु । राज्ञामनेनैव कोशाधिष्ठातॄणां दातृत्वं नान्यथेत्यर्थः । यथा येनानुज्ञानेन इयं कन्या पौत्रं पुत्रभवं अघं दुःखम् । तृतीयार्थे द्वितीया । पुत्रभवेन दुःखेनेत्यर्थः । न रोत्तात् न रोदितु । अयं भावः । अग्निरत्रागत्य वरुणानुमतो अस्यै कन्यायै पुत्रादिकं ददातु । तथा येन हेतुना इयं कन्या पुत्रादिसम्भवदुःखेन न रोत्तात् न रोदित्वित्याशंसावाक्यार्थः । रोत्तादिति 'रुदिर् अश्रुविमोचने' इत्यस्य तुह्यास्तातङ्-देशे गुणः इडभावश्चेति छान्दसत्वेन बोध्यम् ॥१॥ इमामग्निस्त्रायतामिति ॥ गार्हपत्योऽग्निरग्निहोत्राऽग्निरिमां कन्यां त्रायताम् रक्षतु । अग्निहोत्रफलसम्बन्धेन सत्करोत्वित्यर्थः । अस्यै इति षष्ठ्यर्थे चतुर्थी । अस्यै अस्याः कन्यायाः प्रजां सन्ततिं दीर्घमायुश्च निर्दुष्टबहुकालीनजीवनं नयतु प्रापयतु । इयञ्च कन्या अशून्योपस्था पुत्रैर्न शून्यं उपस्थमुत्सङ्गं यस्याः सा अशून्योपस्था अवन्ध्यात्वेनेति वा । लिङ्गे तूपस्थमित्याहुरन्वयोत्सङ्गयोरपि इति गङ्गाधराः । यद्वा भर्त्तुरुत्सङ्गासनाऽशून्योपस्था अशून्यमहीनं उपस्थं भर्त्तुरुत्सङ्गं यस्याः सा अशून्योपस्था । तत्रापि जीवता दीर्घायुष्मतां पुत्राणां माता चास्तु जीवत्पुत्रिका भवत्वित्यर्थः । किञ्च इयं पौत्रं पुत्रादिसम्बन्धजं आनन्दं सुखसन्दोहं अभि समन्ततः व्याप्येति शेषः । आभिमुख्येन सर्वभावेन वा प्राप्य विबुध्यतां जानात्वित्यर्थः । सर्वज्ञास्त्वित्यर्थः । अग्निरक्षितेयं कन्या दीर्घायुः सुभगा जीववत्सा पुत्रानन्दसमन्विता भवत्वित्याशंसावाक्यार्थः । स्वाहा सुहुतं भवतु इति ॥ २ ॥ स्वस्तीति । हे अग्ने हे यजत्र यजन्तं त्रायते इति यजत्रस्तस्य संबुद्धौ हे यजत्र । आपृथिव्या पृथिवीमारभ्य आदिवः स्वर्गपर्यन्तं यानि स्वस्ति कल्याणानि

व आपृथिव्या विश्वानिधेह्यऽयथा यजत्रयदस्या-
महिदिविजातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्र ँ
स्वाहा इदमग्नये ॥ ३ ॥ सुगन्नः पन्थां प्रदिशन्न एहि
ज्योतिष्मद्धेह्यजरन्न आयुः अवैतु मृत्युरमृतं न

तानि विश्वा सर्वाणि अयथेति यथाक्रमं विहाय युगपदेव नोऽस्मासु निधेहि धारय । विश्वा इति अदन्तत्वाच्छन्दसि सिलोपे रूपम् । किञ्च अस्यां पृथिव्यां दिवि स्वर्गे च अमृतादिवत् महिमत्वं महिमाप्रशस्तं श्रेष्ठतमं पवित्रं वा जातं उत्पन्नं तदस्मासु निधेहि स्थापय । किञ्च चित्रं नानारूपं हिरण्यादिरूपभेदेन द्रविणं धनं यत् तदस्मासु धेहि । हे अग्ने गोभूहिरण्यादि सकलानि कल्याणानि धेह्यस्मास्वित्याशंसावाक्यार्थः ॥ ३ ॥ सुगन्नः पन्थां प्रदिशन्न एहीति ॥ हे अग्ने सुखेन गम्यते यत्र इति सुगः तं पन्थां पन्थानं अर्चिरादिमार्गम । नकारालोपः छान्दसः सर्वे विधयः छन्दसि व्यत्ययेन भवन्ति इति न्यायात् । प्रदिशन्नुपदिशन्नोऽस्मानेहि आगच्छेत्यर्थः । प्रदिशन्सम्पादयन्निति वा । किञ्च आयुर्निर्दुष्टजीवनं धेहि देहीत्यर्थः । धेह्यत्र दानेऽर्थे । कीदृशमायुः ज्योतिष्मत्प्रकाशकमित्यर्थः । शुभकर्म्मजन्यकीर्त्त्या सर्वत्र प्रथितं अजरं जरारोगादिपराभवरहितम् । यतः केनचिद्भागवतेनोक्तम् । धर्म्मोपेतं यशोयुक्तं सह ओजोबलान्वितम् । प्रगल्भं सर्वगं सर्वविभूतिमदशोकि यत् ॥ १ ॥ दयादानपरं पुष्टं रोगपापविवर्जितम् । ईश्वरप्रणिधानेन तुष्ट्या सत्सङ्गमेन च ॥ २ ॥ जीवनं जीवनं प्रोक्तं सतोऽन्यन्मृत्युना समम् । अन्योऽब्रवीति न समं मृत्युस्तस्माद्वरो मतः ॥ ३ ॥ अजर इति पाठे अग्निविशेषणम् । तत्र आयुष्मान् इत्यर्थः । प्रज्वलन्निति वा । अयं भावः । अग्निरस्मद्गृहानागत्य सुगं पन्थानं सम्पादयन्निर्दुष्टजीवनमायुर्ददात्वित्याशंसावाक्यार्थः । किञ्चायुःप्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादवैतु अपगच्छतु ततोऽमृतमानन्दं

आगाद्वैवस्वतो नोऽभयं कृणोतु स्वाहा ॥ इदमग्नये ॥ ४ ॥ परं मृत्योऽनुपरेहि पन्थां यस्तेऽन्य इतरो देवयानात् चक्षुष्मते शृण्वते ते ब्रवीमिमानः प्रजाᳫँ रीरिषो मोत वीरान् स्वाहा ॥ इदं वैवस्वताय ॥ ५ ॥

च नोऽस्मान् अगात् आगच्छतु । वैवस्वतो नो धर्म्मराजश्च नोऽस्माकं अभयं यज्ञादौ त्वयि होमादिविधाने पापाभावहेतुकीभूतानिरयदुःखभयाभावं कृणोतु करोतु इत्यर्थः । स्वादिगणे "डुकृञ् करणे" इत्यस्य रूपम् । यद्वा 'कृञ् हिंसायाम्' इत्यस्यैव रूपम् । तदा अभयमित्यत्र अ इति पृथक् पदम् । अ इति निषिद्धे कर्म्मणि तथा सति अं च भयञ्च तयोः समाहारः अभयं धर्म्मराजो नोऽस्माकं अस्मत्सम्बन्धि यत् अभयं निषिद्धं कर्म्मजातं भयं च कृणोतु हिनस्तु इत्याशंसावाक्यार्थः । अः स्वरे च निषेधे च विश्लाघेऽमृतजीवयोः । निषिद्धे कर्म्मणि तथा सप्तस्वर्थेषु अः स्मृतः ॥ १ ॥ इत्यनेकार्थोऽभिव्यञ्जके कोशे ॥ ४ ॥ परं मृत्यवित्यादिमन्त्रस्य संकर्षण ऋषिस्त्रिष्टुप् छन्दो मृत्युर्देवता आज्यहोमे विनियोगः । परं मृत्यविति ॥ हे मृत्यो परं पन्था पन्थानं उत्कृष्टं मार्गं अनु परेहि अनुगच्छ परावृत्यायाहीत्यर्थः । ते तव योऽन्यः पन्था हिंसात्मकः स देवयानात् देवानां इन्द्रादीनां यज्ञभागादानाय यत् यानं वर्त्म तस्मादितरः ततः स्वीयमार्गात्परं मुख्यं यद्देवयानमहिंसात्मकत्वात् तेन यज्ञे आहुत्यादानाय अनुपरेहि आगच्छाति । याचनावाक्यार्थः किञ्च अहिंसासाक्षित्वेन चक्षुष्मत्त्वेन सर्वलोकव्यवहारं साक्षात् दृष्टवते शृण्वते सर्वलोकव्यवहारं श्रुतवते ते तुभ्यं एतदेव ब्रवीमि यत्त्वं पूजितः सन् नोऽस्माकं प्रजां अस्मत्सम्बन्धिनीं सन्ततिं पुत्रपौत्रकन्यादिलक्षणां मा रीरिषः मा मारय । अनयाहुत्या तुष्टस्त्वं रक्षां कुर्वित्यर्थः । उत अपि च वीरान् पुत्रान् भ्रातॄन् वा मा रीरिषः । वीरशब्देन पुत्रोऽभिधीयते पुत्रो वीर इति श्रुतेः । रीरिष इति "रिष हिंसायाम्" इत्यस्य धातोर्यङ्लुकि

**अत्र प्रणीतोदकस्पर्शः ॥ ततो वधूमग्रतः कृत्वा वधूवरौ प्राङ्मुखौ स्थितौ भवतः। ततो वराञ्जलिपुटोपरि संलग्नवध्वञ्जलिघृताभिघारितवधूभ्रातृदत्तशमीपलाशमिश्रैर्लाजैर्वधूकर्तृको मन्त्रपाठपूर्वको होमः ॥**

लुङन्तस्य मध्यमपुरुषैकवचने रूपम् । अत्र माङ्योगादडागमो न । तत्रैके आचार्य्याः अग्निरेत्वित्यादीनां परं मृत्यवित्यन्तानां पञ्चमन्त्राणां अधिदेवतानां आहुतिप्रक्षेपं प्राशनान्त आहुः । अपरे परं मृत्याविति मंत्रपञ्चकेनैवाहुतिप्रक्षेपं संस्रवप्राशनमिति आहुरित्यर्थान्मतभेदेन विभाषा प्राप्ता सा च सर्वेषामेव प्राशनम् । नैतयोरेव । अत एवात्रापि प्रक्षेपे न दोषः प्राशनान्ते प्रक्षेपेऽपि न दोषः किञ्चात्रैव सर्वे कुर्वन्ति । अत इयं गङ्गेत्यैतिह्यप्रमाणद्वाराऽत्रैव कर्त्तव्यः । इति तात्पर्य्यम् । अत्र प्रणीतोदकस्पर्शः स च पूर्वोक्तेनैव विधिना विधेयः ॥ ५ ॥ अथ वधूमग्रतः कृत्वेति ॥ ततो वधूमुत्थाप्याग्रतः वरादग्रे कृत्वा निधाप्य विधिं विदध्यात् । तथा च स्मृतिः । वरादग्रे वधूः स्थित्वा लाजाहोमं समाचरेत् । इति विधिः । तत्र वधूवराविति । वधूवरौ प्राङ्मुखौ भवतः होमायेति शेषः । ततो वराञ्जलिपुटोपरीति । ततः प्राङ्मुखस्थित्यनन्तरं वरस्याञ्जलिपुटोपरि संलग्नो यो वध्वञ्जलिः तत्र स्थिता ये घृताभिघारिता घृतोपलिप्ताः शमीपलाशैर्मिश्राः शमीपत्रैः सहिताः लाजा भर्ज्जितव्रीहिजा धान्यविशेषास्तैः करणभूतैर्वधूकर्त्तृको होमः । वधूः कर्त्री यस्मिन् स होमः आहुतिविसर्गः कर्त्तव्यः। इति विधिः । तत्र श्रुतिस्मृतिभाष्यप्रमाणानि । भ्रातृदत्तान् शमीपलाशमिश्रान् लाजान् सꣳहितेनाञ्जलिना जुहुयात्तिष्ठन्ती कुमारीति श्रुतिः । आज्यप्लुतान् शमीमिश्रान् भ्रातृदत्तांस्तु स्वाञ्जलौ । सवराञ्जलिना तेन वह्नौ जुहुयात्स्थिता वधूरिति स्मृतिः ॥ तथा च हरिहरभाष्ये । कुमार्य्या भ्राता शमीपलाशमिश्रान् लाजानञ्जलिनाञ्जलावावपति तान् जु-

**ॐअर्य्यमणं देवं कन्या अग्निमयक्षत स नो अर्य्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा॥ १ ॥ इयं**

होति सꣳहितेन तिष्ठती । अस्यार्थं विवृणोति कुमार्य्या इति । भ्राता स्वाञ्जलिना कृत्वा कुमार्य्या अञ्जलौ शमीपलाशामिश्रान् शमीपत्रयुतान् लाजान् आवपति प्रक्षिपति । सा च संहितेन मिलितेनाञ्जलिना तिष्ठन्ती कुमारी तान् लाजांश्चतुर्थांशमितान् जुहोति । तथाचोक्तम् । प्रस्थस्य च चतुर्थांशं व्रीहीणां भर्ज्जयेत्सुधीः । तान् लाजान् जुहुयाद्वह्नौ भ्रातृदत्तान् तथाञ्जलौ ॥ शमीपलाशमिश्रांश्च घृतेनाप्यभिघारितान् । सहशूर्प्पस्य कोणेन दशैवाहुतयस्तथा इति कल्पतरौ व्याख्यानात् । प्रस्थचतुर्थांशभर्ज्जितव्रीहीणां विहितलाजैर्दशाहुतयो विधेयाः अग्निपरिक्रमणसमये इति तात्पर्य्यम् ॥ अर्य्यम्णं देवमित्येवमादिभिर्मन्त्रैः प्रतिमन्त्रं तान् जुहोतीति वचनात्तृतीयवेलायामञ्जलिस्थसर्वहोमः । चतुर्थे शूर्प्पकोष्ठेनेति शूर्प्पावशिष्टानां निःशेषेण सर्वलाजहोमस्य वक्ष्यमाणत्वात्शूर्प्पकोणेनाऽऽवपनन्तु सकृदेव आवृत्तेरश्रवणात् । अथ मन्त्रार्थः । अर्य्यम्णामित्यादिमन्त्राणां त्रयाणां दध्यङ्ङाथर्वण ऋषिरनुष्टुप् छन्दोऽग्निर्देवता लाजाहोमे विनियोगः । कन्या पूर्वं इति शेषः । प्रथमं अर्य्यम्णं सूर्य्यदेवं कान्तं अग्निमग्निस्वरूपं वरलाभायायक्षत अयजन । लुङि आतमनेपदे प्रथमपुरुषबहुवचने रूपम् । स चार्य्यमा देवस्ताभिरिष्टो यतो यस्मादिदानीं परिणीता कन्या इतः पितृकुलात प्रमुञ्चतु प्रमोचयतु वियुनक्तु परन्तु पतेः पत्युः कुलान्मा प्रमोचयतु मा वियुनक्तु पतेः सहचरित्वाद्वा मा प्रमुञ्चवित्यर्थः । यद्वा कन्येति प्रथमैकवचनम् । अयक्षतेत्येकवचने बहुवचनम् छान्दसत्वात् । वरो ब्रूते कन्यार्य्यम्णं देवं अग्निरूपेणाऽयक्षताऽयजदित्यर्थः । सोर्य्यमा देवः पतेः पत्युर्मनः सकाशादिमामिति शेषः । मा प्रमुञ्चतु ततो न वियुनक्तु । इतः इति षष्ठ्यर्थे पञ्चमीति निपातः । ततश्च इतोऽस्याः कन्यायाः सकाशान्मां न प्रमुञ्चत्विति अत्रेदं मन्त्रत्रयं

नार्य्युपब्रूते लाजानावपन्तिका आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ २ ॥ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च संव-

कन्यैव वरपाठिता पठतीति तथैव विधेर्विहितत्वात् इत्यर्थः ॥ १ ॥ इयं नार्य्युपब्रूते इति । इयं नारी वधूः उपेति पत्युः समीपे ब्रूते सुवदते । किं कुर्वती प्रसवनिमित्तकसवितृप्रसादसिद्ध्यै लाजान् भृष्टव्रीहीन् आवपन्तिका अग्नौ मन्त्रपाठपूर्वकमाक्षिपन्ती पातयन्ती । स्वार्थे कः ह्रस्वो वेति ह्रस्वः । पत्युः समीपे किं ब्रूते मे मम पतिरायुष्मान् पुष्टवीर्य्यसफलवीर्य्यायुरस्तु । सफलजीवनत्वमुक्तम् । जीवनं सफलं तस्य यस्य जीवन्ति मानवाः । पितरो देवता ऋषयस्तथा चातिथयोऽग्नयः ॥ पाचका भिक्षुका भृत्याः स्वकुटुंबाश्च बान्धवः । एते चाऽन्ये तथा लोका आत्मार्थे को न जीवति इति । तथा च मम ज्ञातयो बान्धवा एधन्तां वर्द्धन्तामिति ॥ २ ॥ इमानिति वधूः कथयति । हे भगदेव अहं इमान् लाजान् अग्नौ आवपामि प्रक्षिपामि । किम्भूतान् इमान् तव त्वद्दत्तसौभाग्यसमृद्धिकरणं समृद्धिहेतून् । बहुवचने एकवचनम् । किञ्च मम तुभ्यं चेति त्वदर्थे तव सौभाग्यार्थे संवननं अनुरागः परमं प्रेम अतिशयेन प्रीतिः तदयमग्निर्भगो देवोऽनुमन्यताम् । अनुमोदनं कुरुतात् । तुभ्येत्यत्र मकारलोपश्छांदसः । केचिदेवमेतन्मन्त्रस्य व्याख्यां कुर्वंति । इमानिति । हे पते अहं इमान् लाजानग्नौ आवपामि किंभूतान् इमान् तव समृद्धिकरणं समृद्धिहेतून् । बहुवचने एकवचनम् । अतो मम तुभ्यं च तव संवननं अनुरागः परस्परं प्रेम तदयमग्निरनुमन्यताम् । अनुमोदनं कुरुतात् । तुभ्य इत्यत्र मलोपः छान्दसः । तुभ्येति षष्ठ्यर्थे चतुर्थी । सम्पूर्वो 'वनु याचने' वशीकरणार्थः । तथा च संवननं तव वशीकरणमग्निरनुमन्यताम् । इयꣳस्वाहेति । इयं च स्वाहा तत्पत्नी साप्यनुमन्यतां इति ।

# ननं तदग्निरनुमन्यतामियꣳ स्वाहा ॥ ३ ॥ अथास्यै दक्षिणꣳ हस्तं साङ्गुष्ठं गृह्णाति वरः गृभ्णामि ते सौ-

एतत्पूर्वोत्तरविरोधादसमीचीनम् ॥ ३ ॥ अथास्यै इति षष्ठ्यर्थे चतुर्थी । अस्या वध्वाः साङ्गुष्ठं हस्तं अङ्गुष्ठसहितं करं गृभ्णामीति मन्त्रेण वरो गृह्णाति । गृभ्णामि ते इति । गृभ्णामीति मन्त्रस्य याज्ञवल्क्य ऋषि-स्त्रिष्टुप् छन्दो लिङ्गोक्ता देवता हस्तग्रहणे विनियोगः । अथ मन्त्रार्थः । हे पत्नि ते तवाहं हस्तं गृभ्णामि गृह्णामि । ग्रहेर्भः छन्दसीति हस्य भत्वम् । पत्नी पाणिगृहीती स्यादित्यमरः । यथा येन गृहीतेन हस्तेन मया पत्या सह जरदष्टिर्जरच्छरीरा बहुवर्षा आयुष्मती आसः भविष्यसि आस इति भविष्यसीत्यर्थे निपातः । जरदं वार्द्धुषं अश्नुते व्याप्नोतीति जरदष्टिः जरत्पूर्वक 'अशूङ् व्याप्तौ' क्तिन् प्रत्ययान्तः । ननु मद्धस्तग्रहणे कथं तवाधिकारस्तत्राह । भगोऽर्यमा सवितेत्यादि । भगादयास्तु ये देवास्त्वा त्वां ते मह्य-मदुर्दत्तवन्तः कस्मै गार्हपत्याय गृहस्वामिनीत्वाय भाविगार्हपत्यं सेवितुं गार्हपत्यायेत्युपलक्षणम् । एतेनैवान्यान्युपलक्षितान्यपि दर्शयति । किञ्च सौभगत्वाय शुभगानां षोडशशृङ्गाराणां नवरसानां च रक्तवाससां चो-त्तमभूषणानां अलङ्काराणां च समूहः सौभगं तस्य भावः सौभगत्वं तस्मै । किञ्च सूतये प्रसवाय परमानन्दावाप्तये चेत्यर्थः । किंभूतां त्वां पुरंधिरिति द्वितीयार्थे प्रथमा । पुरंधिं सुरूपवतीं प्रशस्तामित्यर्थः । तथा चोक्तं कामकन्दलिकायाम् । अनेकार्थप्रकरणे । रूपवत्यां पुरन्धिः स्यात्पुरन्धि-र्मोहिनी मता । प्रशस्तायामपि च सा पुरन्धिर्धृतकौतुकेति । पुरोऽग्रे धीयते स्थाप्यते इति पुरन्धिः । खिप्रत्यायान्तो धा धातुः पुरस्पूर्वः सलोपे मुमागमः खिति पदस्येति सूत्रेण । तथा च श्रुतिः । भवमोहनाय पुर-न्धिर्भूत्वा योषारूपं दधानो हरिरवततारेति । अथ षोडशशृङ्गाराः । पूर्वं म-र्दनचीरहारतिलकं नेत्राञ्जनं कुण्डलम् नासामौक्तिकपुष्पमालाकरणं

**भगत्वाय हस्तं मया पत्या जगदष्टिर्यथासः । भगोऽर्य्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ४ ॥ अमोऽहमस्मि सात्वꣳसात्वमस्यमा**

झकारकृन्नूपुरम् । अङ्गे चन्दनलेपकञ्चुकमणिक्षुद्रावलीघण्टिकास्ताम्बूलं करकङ्कणं चतुरता शृङ्गारकाः षोडश ॥ १ ॥ पुंसां शृङ्गाराः । क्षौरं मर्द्दनशीर्षवस्त्रतिलकं गात्रे सुचित्रार्च्चनं कर्णे कुण्डलमुद्रिका च मुकुटं पादौ च चर्मावृतौ । हस्ते शस्त्रपटाम्बरं कटिच्छुरी विद्याविनीतं मुखं ताम्बूलं सुरशीलवत्त्वगुणिता पुंसस्त्वमी षोडशेति । अथ नव रसाः । शृङ्गारहास्यकरुणाद्भुतवीरभयानकाः । बीभत्सरौद्रशान्ताश्च रसा नव भवन्त्यमीति । अर्यमसावितृभगैस्त्रिभिर्देवैस्त्रितयं प्रदत्तम् । अर्यमा गार्हपत्यं सविता चानन्दावाप्तिपूर्वकम् प्रसवं भगश्च सौभाग्यं दत्तवानिति अर्यम्णं देवं प्रथमम् ॥ १ ॥ इयं नार्युपब्रूते इति द्वितीयम् ॥ २ ॥ इमान् लाजानिति तृतीयम् ॥ ३ ॥ त्रिभिरेतैर्लाजाहोममन्त्रैर्लाजाहोमं कुर्वती यद्यत्प्रार्थितवती सा तत्तत्तैर्दत्तमिति भावः ॥ ४ ॥ अमोऽहमस्मीति मन्त्रस्य भारद्वाज ऋषिरुष्णिक् छन्दो विष्णुर्देवता हस्तग्रहणे विनियोगः । अथ मन्त्रार्थः । हे पत्नि अमो विष्णुरहमस्मि सा लक्ष्मीस्त्वमसि यद्वा सा देवीत्रयरूपा त्वमसि अमो देवत्रयरूपोऽहमस्मि । अथ अमशब्दव्याख्या । अम गतौ अमति सर्वत्र गच्छतीति अमः विष्णुः । यद्वा 'अम वेदने' अमति सर्वं वेत्तीति अमः विष्णुः । सेति "षूङ् प्रसवे" इत्यस्य रूपम् । सूते विश्वमिति सा लक्ष्मीः नाम्नि चेत्यत्र चकारान्नाम्न्युपपदाभावेऽपि ड इति डः । आबन्तश्च इति सा इति सिद्धम् । अमशब्दस्य देवत्रयवाचकत्वमाह । "अम गतौ" अमति रजःप्रधानत्वेनात्मना सृष्टौ सदा वर्तते इति अमो ब्रह्मा । अथ च "मीङ् हिंसायां" नञ् पूर्वं इत्यस्य रूपम् । न मिनोति न हिनस्तीति अर्थात् पालयतीति अमः विष्णुः । अथ च अं प्रपञ्चं मिनोति हिनस्तीति अमः महारुद्रः "ओ विष्णुः

**अहं सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् ॥५॥ तावेव विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ॥६॥ ते सन्तु जरदष्टयः**

रः शिवः प्रोक्तः प्रपञ्चे अः स्मृतस्तथा" इत्यनेकाक्षरसमाम्नाये । इत्थमेतदर्थत्रयेणामशब्दस्य देवत्रयवाचकत्वे अमाः त्रयो देवाः अहमस्मि । सा इत्यस्य देवीत्रयीवाचकत्वमाह । सवति शब्दानिति सा सरस्वती । सवति विश्वमिति सामा । सवति मन्त्रतन्त्रजालानीति सा रुद्रशक्तिः रुद्राणी इत्थमेतदर्थत्रयेण सा शब्दस्य देवीत्रयीरूपा त्वमसि । किञ्च अहं सामास्मि साम सामवेदोऽस्मि । "वेदानां सामवेदोऽस्मि" इति भगवद्वचनात् । त्वं ऋगसि ऋग्वेदोऽसि ऋच् शब्दस्य स्त्रीत्वात् । अहञ्च द्यौरस्मि पृथिवी त्वमसि तत्तद्गुणान्वितावावामित्यर्थः । यथाऽऽकाशो गुणी महांश्चानन्तोऽपरिछिन्न उपर्युपरि वरीवर्ति तथाहमप्येतद्विशेषणविशिष्टस्त्वय्युपरि सदा वरिवृत्याम् । यथा च उर्वी अनेकप्रकारेण छिन्ना भिन्ना उत्खाताऽऽक्रान्ता पीडिताऽपि सती न किञ्चिद्वदति क्षमावत्त्वशीलत्वात् तथा त्वमपि मद्गृहे श्वश्रूननन्दृप्रभृतिभिराक्रान्ताऽपि न किञ्चिद्वदस्व स्वाभाविकक्षमादिकगुणवत्त्वशीलनेन तच्छुश्रूषामेव कुरुतात् ॥ ५ ॥ ताविति मन्त्रस्याथर्वण ऋषिरनुष्टुप्छन्दो विष्णुर्देवता हस्तग्रहणे विनियोगः । अथ मन्त्रार्थः । तावेवाऽऽवां विवाहं करवावहै विवाहो नाम भिन्नगोत्रयोः कन्यावरयोः ऋषिप्रणीतवेदवशान्मन्त्रबलेनैकगोत्रतोत्पादनपूर्वकदम्पतिभाववर्तनेऽधिकारः । किञ्च सह रेतो दधावहै । विवाहानन्तरकालचंक्रमेण सह संयुक्तौ रेतः पुत्रदेहरूपं दधावहै धारयाव प्रसवसंजननार्थं शुक्रशोणितसंयोगं करवावहै ततः प्रजां पुत्रादिसन्ततिं प्रजनयावहै उत्पादयाव ततः पुत्रान् पुत्रपुत्रान् पौत्रादिसन्ततिं बहून् पुत्रपौत्रप्रपौत्रादीन विन्द्यावहै लभावहै प्राप्नुयाव इत्यर्थः ॥६॥ ते सन्त्विति ।

**संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः शतमिति ॥ ७ ॥ ॐ आरोहेममश्मानमश्मेव त्वं स्थिरा भव अभितिष्ठत प्रतन्यतोऽवबाधस्व पृतनायत इति ॥ ८ ॥ अथ**

ते सन्त्विति मन्त्रस्य प्रजापतिर्ऋषिः यजुः छन्दो विष्णुर्देवता हस्तग्रहणे विनियोगः । अथ मन्त्रार्थः । ते च पुत्राः पौत्राः जरदष्टयः सन्तु जरत् वृद्धत्वं अश्नुवन्तीति जरदष्टयः । किञ्च आवामपि संप्रियौ सम्यक् प्रीतौ परस्परं प्रेमशालिनौ । रोचिष्णू सुदीप्तौ शोभमानौ वा । सुमनस्यमानौ शोभनां मनोवृत्तिं कुर्वाणौ । सुमनसो भावः सौमनस्यं सुमनस्यं वा तत्कुर्वाणावित्यर्थः । इन्द्रियपाटवमालभमानास्ते वयञ्च पुत्रादिसहिताः शतं शरदो वत्सरान् पश्येम रूपग्रहणसमर्थाः स्याम । तथा शरदः शतं जीवेम निरुपद्रवप्राणान् धारयाम । तथैव शरदः शतं शृणुयाम निर्दुष्टशब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः ॥ ७ ॥ साङ्गुष्ठहस्तग्रहणे सूत्रं प्रमाणयति । अथास्यै इति । अथास्यै दक्षिणं हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वायेत्यादि शृणुयाम शरदः शतमित्यन्तेन मन्त्रद्वयेनेति सूत्रम् । अत्र गृभ्णामीत्यत्र ग्रहेर्भः छन्दसीति हकारस्य भकारः । सूत्रार्थमाह । अथ होमानन्तरं अस्यै इति षष्ठ्यर्थे चतुर्थी । अस्याः कुमार्य्या दक्षिणं हस्तं गृह्णाति स्वदक्षिणहस्तेनादत्ते । कीदृशं हस्तम् । साङ्गुष्ठं अङ्गुष्ठेन सहितं इति सूत्रार्थः । वध्वा दक्षिणचरणेनाश्मारोहणे सूत्रप्रमाणं दर्शयति । अथैनामश्मानमारोहयत्यग्नेरुत्तरतो वरस्थापितदृषदं दक्षिणपादेनारोहेममश्मानमित्यादि पृतनायत इत्यन्तेनेति । अस्यार्थः । अथ पाणिग्रहणानन्तरं एनां वधूं उत्तरतोग्नेर्वरस्थापितमश्मानं दृषदं दक्षिणपादे कृत्वाऽऽरोहयति वरः आरोहेममश्मानमिति मन्त्रेण । अनेनाश्माधिष्ठानकवधूपादारोहणे प्राप्तं वरस्य कर्तृत्वं मन्त्रपाठश्चेति । आरोहेममिति मन्त्रस्याथर्वणऋषि-

आरूढायामेव तस्यां वरो गाथां गायति ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति तां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूत॑ँसमभवदस्यां विश्वमिदं जगत् तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इति ॥ ततोऽग्रे वधूः पश्चाद्वरः प्रणीता-

रनुष्टुप् छन्दो वधूर्देवताऽश्मारोहणे विनियोगः । अथ मन्त्रार्थः । हे पत्नि त्वं इमं पुरोवर्तिनं अश्मानं प्रस्तरमारोह आक्रम अधितिष्ठेति यावत् । अश्मारोहणसंस्कारेण संस्कृता सती त्वमश्मेव पाषाणवत् स्थिरा निश्चला भव । किञ्च प्रतन्यंति प्रतनां युद्धनिदानभूतां सेनां कलहसामग्रीं वा अथवा प्रतनं सङ्ग्राममिच्छन्तीति प्रतन्यन्तः तान् प्रतन्यतः कलहकारिण इत्यर्थः । ततश्च पृतनाभिर्यन्ति कलहकरणायागच्छन्तीति पृतनायन्तस्तान् अव बाधस्व अवाचीनान् कृत्वा बाधस्व । सोद्यमान्निरुद्यमान् कुर्वित्यर्थः । अथ गाथागानमश्मारूढायामेव कन्यायां तत्र सूत्रं प्रमाणयति । अथाश्मारूढायामेव कन्यायां वरो गाथां गायति इति । अस्यार्थः । कन्यायामश्मारूढायां सत्यां वरो गाथां गायतीत्यन्वयः । गाथा किमुच्यते इत्याशङ्क्य व्याख्यायते। गीयते स्तूयतेऽनयेति गाथा। यद्वा गा गानं उत्तिष्ठत्यस्यां इति गाथा तां गायति ॥८॥ अथ मन्त्रार्थः । सरस्वतिप्रेदमित्यादि गाथाया विश्वावसुर्ऋषिरनुष्टुप् छन्दः सरस्वती देवता गाथागाने विनियोगः । अथ गाथार्थः । हे सरस्वति वाग्रूपे सुभगे कल्याणि वाजिनीवति वाजमन्नं तदस्तस्यामिति वाजिनी अन्नशाला महानसं तद्वती वाजिनीवती तस्याः सम्बुद्धिपदं हे वाजिनीवति हे अन्नपूर्णे । तदुक्तम् । सरस्वती श्वेतवर्णा हंसारूढा महाद्युतिः । सर्वेभ्योऽपि विचित्रान्नप्रदा विद्याऽनुरागिणीति । एतेन विद्यावती विचित्रान्नवतीति ध्वनितम् । अथवा वाजाः पक्षास्तद्वती वाजिनी हंसी तद्वती त्वं इदं विवाहरूपं कर्म यद्वा इदं वधूवररूपं द्वन्द्वं प्राक् प्रकृष्टं रक्षतां त्वा त्वां अस्य विश्वस्य सर्वस्य भूतस्य

**ब्रह्मसहितमग्निप्रदक्षिणं कुरुतः ॥ ९ ॥ अथ वधूवरौ अग्निं प्रक्रामतस्तुभ्यमग्ने इति मंत्रेणेति ॥ तुभ्य-मग्ने पर्य्यवहन् सूर्य्यां वहतु ना सह पुनः पतिभ्यो जायां दाऽग्ने प्रजया सहेति पठन् परिक्रामेत ॥१०॥**

जातस्य कार्य्यस्य पृथिव्यादेः प्रपञ्चस्य प्रजायां प्रकृष्टां जनित्रीमाहु-र्मन्त्राः । किंभूतां त्वां अग्रतः कार्य्यतः प्रथमां कारणरूपाम् । तदेव प्रप-ञ्चयति यस्यामिति । यस्यां प्रकृतिरूपायां त्वयि इदं सर्वं विश्वं पृथिव्या-दि सर्वं जगत् असंगतं " आस प्रलये प्रलीनमासीत् " इत्यर्थः । पुनः सृ-ष्ट्यादौ च यस्याः सकाशात्समभवत् जातं पुनरुत्पन्नमित्यर्थः । प्रकृति-रूपत्वात्सरस्वत्याः तन्निरूपणेन सर्वासां स्त्रीणां प्रकृतिरूपावशेषस्तुतिः कृता इत्यर्थः । एतदेव स्फुटत्वेन दर्शयति । अहं स्त्रीणां तां गाथां गास्यामि गायामि । वर्त्तमानसामीप्ये वर्त्तमानवत् । तां कां या उत्तमं यशः पातिव्रत्यादि स्त्रीणां धर्म्माचरणजनितकीर्त्तिर्या तां गाथां गास्यामीत्यर्थः । गाथाशब्दो नि-पातनात्साधुः तदेव दर्शयति गीयते सुबुद्धिभिरिति । गा गीतिर्गानमि-त्यर्थः । गैशब्द इत्यस्य नान्मिचेति डा आबन्तप्रयोगः । चेति चकारान्नामोपप-दाभावेऽपि डाप्रत्ययः । गा गानं उत्तिष्ठते यस्याः सा गाशब्दापूर्वकादुपसर्ग-सहितस्थाधातोर्डाबन्तप्रयोगः । उदस्थास्तम्भोः सलोपश्चेति सकारलो-पः उल्लोपश्च निपातनात् । सूत्राद्युक्तनिमित्ताभावेऽपि साधनं निपातः । गाथाशब्दे उल्लोपनिपातमात्रे गाथाशब्दो निपातनात्साधुरित्युक्तम् इति ॥ ९ ॥ ततोऽग्निप्रदक्षिणकरणे सूत्रं प्रमाणयति । अथ वधूवरौ अग्निं प्रक्रामत-स्तुभ्यमग्ने इति मन्त्रेणेति । अस्यार्थः । अथ गाथायां समाप्तायां वधूवरौ अग्निं प्रादक्षिण्येन प्रक्रामतः । प्रदक्षिणीकुरुतः । तत्र मन्त्रः । तुभ्यमग्ने इति मन्त्रस्याथर्वण ऋषिरनुष्टुप् छन्दोऽग्निर्देवता तत्प्रादक्षिण्ये विनियोगः । अथ मन्त्रार्थः । तुभ्यमग्ने इति । भो वैश्वानर तुभ्यं त्वदर्थमेव अ-

एवं पश्चादग्नेः स्थित्वा लाजाहोमसाङ्गुष्ठहस्तग्रहणाश्मारोहणगाथागानाग्निप्रदक्षिणानि पुनरपि द्विस्तथैव कर्त्तव्यानीति ॥ एतेन नव लाजाहुतयः सा-

ग्रे पूर्वं जन्मदिनादारभ्य सोमादयः पर्यवहन् परिगृहीतवन्तः इमामिति शेषः । बहुवचनन्तु अग्निसंयुक्ताभिप्रायेण दत्तम् । एतदभिप्रायज्ञापकमेव धर्मशास्त्रवचनम् । षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः । सोमो भुंक्ते च तां तद्वद्गन्धर्वोऽनल एव चेति वर्षद्वयमिति वीप्सा । वर्षद्वयं यावत् त्रयो भुंजन्ति अतस्तद्वर्षेषु नोद्वाह्या । यथा च वर्षद्वयमिन्दुर्भुक्त्वा वरं कान्तिं दत्वा गन्धर्वाय ददौ गन्धर्वस्तु वर्षद्वयं तृतीयचतुर्थवर्षद्वयरूपं भुक्त्वा वरं किन्नरकण्ठं दत्वा तुभ्यं वैश्वानराय ददौ । तथा त्वमपि पञ्चमषष्ठवर्षद्वयं भुक्त्वा वरं दत्वा मह्यं देहीति गूढाभिप्रायो वरस्येत्यर्थः । एतदेव स्फुटयति । अधुना देवभोगसमयानन्तरं मनुष्यभोगसमये सूर्या सूर्यवत् कान्तिशालिनीं इमां पुरोवर्तिनीं ना पुरुषः कुटुम्बभरणेन परमपुरुषार्थयुक्तो यः स प्रसिद्धः सर्वकार्यकरणे शक्तो धैर्यधरो गंभीरवेदी सर्वकार्यसमर्थो मुख्यः पुरुषः पतिभ्यः सोमादिभ्यः पुनरिति देवत्रयभोग्यवर्षादूर्ध्वं वहतु प्राप्नोत्वित्यर्थः । नेति नृशब्देन सामान्यपुरुषप्राप्तौ सत्यां आत्मादिप्रायेण विशेषमाह । हे अग्ने त्वं स्वभोगान्तरं जायां नरेण भर्त्रा सङ्गमय्य पुत्रादिसन्ततिं जनिष्यमाणां प्रजया पुत्रैः सह मह्यं दा देहीत्यर्थः ॥१०॥ एवं पश्चादिति द्विस्तथैव कर्त्तव्यानीत्यत्र सूत्रं प्रमाणयति । द्विरपरं लाजादि चतुर्थꣳशूर्पकोष्ठ्या भ्राता सर्वान लाजानावपति तांश्च भगाय स्वाहेति कुमारी जुहोति । इति त्रिः परीत्य भगाय स्वाहेति शूर्पकोणेन जुहुयात् । इत्यादीनि सर्वाणि त्रिः परिणीतां चतुर्थपरिक्रमणे मन्त्रं विनैव परीत्य प्राजापत्यꣳहुत्वोदीचीं प्रक्रामयतीति इति च । अथैषामर्थः । एवं द्विरपरं लाजादिकर्म भवतीति कोऽर्थः एवमुक्तप्रकारेण द्विर्वारद्वयं अपरं पुनर्लाजादि-

ङ्गुष्ठहस्तग्रहणत्रयं अश्मारोहणत्रयं प्रदक्षिणत्रयं च सम्पद्यते । तथा आसनविपर्ययः । ततोऽवशिष्टलाजैः कन्याभ्रातृदत्तैरञ्जलिस्थशूर्पकोणेन वधूर्जुहोति । ॐ भगाय स्वाहा इदं भगाय । अथाग्रे वरः पश्चात्कन्या तूष्णीमेव चतुर्थपरिक्रामणं कुरुतः ।

वधूभ्रातृदत्तैरित्यारभ्य परिक्रमान्तं कर्म भवतीति ततः तृतीयपरिक्रमणानन्तरं चतुर्थे चतुर्थे होमे शूर्पस्य कोष्ठया कोणेन सर्वान् शूर्पावशिष्टान् लाजान्वध्वञ्जलावावपति भ्राता । तांश्चेति । तांश्च लाजान् उत्तिष्ठन्ती वधूर्वह्नौ निक्षिपति भगाय स्वाहेति वधूर्जुहोति । त्रिः परिणीतामिति । त्रिस्त्रिवारं परितोऽग्नेर्नीतां त्रिः परिणीतामिति पदेनैव चतुर्थपरिक्रमणे पश्चाद्वधूरग्रे वरः इत्यभिप्रायो लभ्यते । प्रक्रमानन्तरं प्राजापत्यं प्रजापतये हुत्वा उदीचीं प्रक्रामयतीत्यन्वयः । त्रिः परिणीतामित्यत्र त्रिरिति ग्रहणमितरथावृत्तिव्युदासार्थम् । इतरथा वृत्तिश्चोक्ता परिभाषापाठविवृत्त्याम् । वृत्तिश्चित्तस्यावृत्तिरिति । प्रक्रामयिता चात्र वर एव प्रस्तुतत्वादिति अत्र धर्मशास्त्रं प्रमाणयति । तदुक्तं राजमार्तण्डे । वधूवरौ तु प्राक् स्थित्वा संहत्य स्वकराञ्जलीन् । त्रिभिर्मन्त्रैर्हुनेत् लाजान् भ्रातृदत्तान् यथाविधि ॥१॥ घृताभिघारितांश्चैव मिश्रितांश्च शमीदलैः । संगुण्य हस्तं गृह्णीयाद्वरो वध्वा यदा पुनः ॥ २ ॥ अश्मन्यारोहयेद्वाथोद्वानं कुर्याद्वरस्तथा । वरोऽग्रे च वधूं कृत्वा वह्निं ब्रह्मादिसंयुतम् ॥३॥ परिक्रमेद्धि प्रयतो द्विवारं तु पुनस्तथा । विपर्यायासनं स्वं स्वमुपविश्य वधूवरौ ॥४॥ पुनरुत्थाय च स्थित्वा पूर्ववद्धोमहेतवे । भ्रातृदत्ताञ्छिलालाजाञ्शूर्पकोणेन वाञ्जलौ ॥५॥ भगाय स्वाहेत्युक्त्वा तु तांस्तु वह्नौ हुनेद्वधूः । वरोऽग्रे च ततो भूत्वा वध्वास्तूष्णीं परिक्रमेत् । प्राजापत्यं ततो हुत्वा उदीच्यां क्रामयेत्तु ताम् ॥ ६ ॥ सप्तसप्तमण्डलकेषु चेति सप्तपदाक्रमणेऽपि सूत्रं प्रमाणयति । अथैतामुदीचीं प्रक्रमयत्येकमिषे विष्णुस्त्वा-

ततो वर उपविश्य ब्रह्मणान्वारब्धः आज्येन प्राजापत्यं जुहुयात् । ॐप्रजापतये स्वाहा इदं प्रजापतये इति मनसा॥ अत्र प्रोक्षणीपात्रे आहुतिशेषाज्यप्रक्षेपः । तत आलेपनेनोत्तरोत्तरकृतसप्तमण्डलेषु सप्तपदाक्रमणं वरः कारयेत वक्ष्यमाणमन्त्रैः । एकमिषे विष्णुस्त्वा नयतु द्वे उर्ज्जे विष्णुस्त्वा न-

नयत्वित्यादिमन्त्रैरिति । अस्यार्थः । प्राजापत्यं हुत्वा उदीचीं प्रक्रामयतीत्यन्वयः । प्रक्रामयिता चात्र वर एव प्रस्तुतत्वात् । अथेति परिणयनानन्तरं विष्णुस्त्वा नयत्विति सर्वत्रानुषज्जते साकाङ्क्षत्वात् । अथ मन्त्रार्थः । तत्र सर्वमन्त्राणां प्रजापतिर्ऋषिः यजूंषि छन्दांसि लिङ्गोक्ता विष्णुर्देवता प्रक्रामणेषु विनियोगः । एकमिति । एकं पदाक्रमणं इषेऽन्नाय विष्णुस्त्वानयतु इत्यन्वयः । पदाक्रमणमित्युपलक्षणम् । तात्पर्यन्तु विष्णुर्विष्णुरूपोऽहं इषेऽन्नाद्यर्थं त्वां वधूं नयतु एकमात्मानं नयामीत्यर्थः । वरोऽसौ विष्णुरूपेणेति एवमुक्तम् । विभक्तिव्यत्ययः छान्दसः । मदीयान्नादीनां त्वमेव स्वामिनीति भावः। पदाक्रमणं तु मित्रत्वार्जनायेति । यत उक्तम् । मैत्री सप्तपदी प्रोक्ता सप्तवाक्याथवा भवेत् । सत्तराणां तु त्रिपदी सत्तमानां पदे पद इति । मित्रत्वार्जने हेतुं दर्शयति । पापान्निवारयति योजयते हिताय गुह्यं निगूह्य च गुणान् प्रकटीकरोति । आपद्गतं न विजहाति ददाति वित्तं सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः । इति परस्परं पापनिवारणेन हिताय योजनाद्यर्थं मित्रत्वार्ज्जनम् । अलमतिप्रासङ्गिकेन । प्रस्तुतमेवाह । एकमिति । विष्णुर्विष्णुरूपोऽहं त्वां इषे अन्नाय एकं पदाक्रमणं नयामीत्यर्थः । सर्वेषामात्मीयान्नादीनामधिष्ठात्री कारणाय त्वां मण्डले एकं प्रथमं पदाक्रमणं एवं वरेण प्रोत्साहिता वधूर्हृष्टा सती हर्षोक्तिमाह तद्यथा । धनं धान्यञ्च मिष्टान्नं व्यञ्जनाद्यं च यद्गृहे । मदधीनञ्च कर्त्तव्यं वधूराद्ये पदे वदेत् । पुन-

**यतु त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु चत्वा-रि मयोभवाय विष्णुस्त्वा नयतु । पञ्च पशुभ्यो**

वैरो वदति इति । द्वे इति । अहं विष्णुरूपस्त्वां ऊर्ज्जे बलाय द्वे पदाक्रमणं नयामि । सर्वकार्य्येषु बलाबलमपेक्षते गृहस्थस्यातो बलाधिकमात्मानं कर्त्तुं त्वां नयामीति भावः । अयं मङ्गर्त्ता मया हेतुभूतया मदीयसम्बन्धिनां सम्ब-न्धेन बलाधिकोहमिति जानाति श्वशुरगृहे मम मानं भवेदिति हृष्टा हर्षोक्तिं पुनराह । कुटुम्बं प्रथयिष्यामि ते सदा मञ्जुभाषिणी । दुःखे धीरा सुखे हृष्टा द्वितीये साब्रवीद्वरम् इति । पुनर्वैरो वदति । विष्णुरूपोहं रायस्पोषाय धनपुष्टयै त्रीणि पदाक्रमणानि त्वां नयामि । आत्मीयधना-ध्यक्षां त्वां कर्त्तुं त्रीणि पदाक्रमणानि नयामि । ततो वधूरात्मीयधना-ध्यक्षाऽपि स्यामिति मनसा हृष्टा पुनर्हर्षोक्तिं वदति । ऋतौ काले शुचिः स्नाता क्रीडयामि त्वया सह । नाहं परपतिं यायां तृतीये साब्र-वीद्वरम् इति । चत्वारीति । अहं विष्णुरूपस्त्वां मयोभवाय मयः सुखं तस्य भवः उत्पत्तिः तस्मै चत्वारि पदाक्रमणानि नयामि । मण्ड-ले तुरीयपदाक्रमणं सुखाय मम सर्वसुखं त्वदधीनमिति भावः । त-च्छ्रुत्वा मदभिलाषी मङ्गर्त्ताऽयमिति विदित्वाऽतिहर्षिता वधूः पुनराह । लालयामि च केशान्तं गन्धमाल्यानुलेपनैः । काञ्चनैर्भूषणैस्तुभ्यं तुरीये साऽब्रवीद्वरमिति । पञ्चेति अहं पशुभ्यस्तत्तत्पशुसुखाय पञ्च पदाक्रम-णानि नयामि । गोमहिषीप्रभृतीनां पयःपानादिसुखाय नवनीतभक्षणा-दिसुखाय अश्वादीनामारोहणादिसुखाय पञ्चमपदाक्रमणम् । मम पशूना-मपि सर्वेषां त्वमेव स्वामिनीति भावः । सर्वमेव समर्थितं मह्यं मङ्गर्त्ता इत्थमनुरक्तो मयि स्वामीति हृष्टा सती सर्वमेव विवर्द्धयिष्यामीति उ-त्कण्ठिता सुकृतात्सर्वं विवर्द्धतीति मत्वा पुनराह । सखीपरिवृता नित्यं गौर्य्याराधनतत्परा । त्वयि भक्ता भविष्यामि पञ्चमे साब्रवीद्वरमित्यादि । षट् इति । विष्णुरूपोऽहं त्वां ऋतुभ्यः ऋतूनां तत्तत्सुखाय मण्डले

विष्णुस्त्वा नयतु । षट् ऋतुभ्यो विष्णुस्त्वा नयतु । सखे सप्तपदा भव सामामनुव्रता भव विष्णुस्त्वा नयतु । ततोऽग्नेः पश्चादुपविश्य पुरुषस्कन्धस्थिता-

षट् पदाक्रमणानि नयामि । षडृतुसुखानि । केनचिद्विदुषा राज्ञः आशिषां प्रदाने षट्ऋतुसुखानि वर्णितानि । हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः । सुखमनुभव राजन् शत्रवो यान्तु नाशं दिवसकमललज्जाशर्वरीरेणुपङ्कैरित्यत्रोक्तानि स्तनतपनवनाम्भोहर्म्यगोक्षीररूपाणि षट् सुखानि । तत्तदृतौ तत्तत्सुखाय षष्ठं पदाक्रमणं नयामीति भावः । ततो मद्भर्त्तायं मह्यं षडृतुसुखानि दातुमुद्यतः इति हृष्टा सती "सुखं पुण्यैरवाप्यते" इति मनसि कृत्वा पुनराह । यज्ञे होमे च दानादौ भवेयं तव वामतः । यत्र त्वं तत्र तिष्ठामि पदे षष्ठेऽब्रवीद्वरम् । इति । सखे इति । हे सखे हे मित्र । पुंस्त्वनिर्देशस्त्वार्षः । सप्तपदा भव । इहामुत्र सप्तसु भूरादिलोकेषु पदं सुखस्थानं यस्याः सा सप्तलोकप्रख्याता भवेति । भर्त्रा भार्यायाः स्वप्रवणत्वेन प्रसादमधिगतेनाऽऽशीर्दत्ता स्वस्य देवदेवविष्णुस्वरूपत्वात् कथं सप्तलोकपदा भविष्यामीति चेच्छृणु । सामामिति । सा त्वं मामनुव्रता भव मेऽनुवर्तिनी भवेति पातिव्रत्यशीलजानितेनोत्तमधर्म्मेण सप्तलोकख्याता भविष्यसीति तात्पर्य्यम् । स्त्रीणां तु सर्वधर्म्मेभ्यः शीलरक्षणमुत्तमम् इति वचनात् । तथा च मुहूर्त्तचिन्तामणौ रामेणाप्युक्तम् । 'भार्य्या त्रिवर्गकरणं शुभशीलयुक्ता' इति । अथवा सखे मित्र सप्तपदा भव विष्णुरूपः सप्तपदाक्रमणं नयामि इत्थं भर्तुः प्राप्तप्रसादहृष्टा पुनराह । सर्वेऽत्र साक्षिणस्त्वं हि मम भर्तृत्वमागत । कृतेन ब्रह्मणा पूर्वं विधानेन कुलोत्तमेति । इति सप्तपदाक्रमणं समाप्तम् ॥ अथाभिषेकः । अभिषेके सूत्रं प्रमाणयति । निष्क्रमणप्रभृत्युदकुम्भः स्कन्धे कृत्वाऽग्नेर्दक्षिणतोऽग्नेर्वामतः स्थितो भवत्युत्तर एकेषां तत एनां मूर्द्ध-

त्कुम्भादाम्रपल्लवेन जलमानीय तेन वरो वधूमभिषिञ्चति। ॐ आपः शिवाः शिवतमाः शान्ताश्शान्ततमास्तास्ते कृण्वन्तु भेषजमित्यनेन पुनस्तथैव तस्मादेव कुम्भात्तथैवानीतजलेन आपोहिष्ठा मयोभुवस्तान ऊर्जे दधात न महे रणाय चक्षसे यो वः

न्यभिषिञ्चत्यापः शिवाः शिवतमाः शान्ताश्शान्ततमास्तास्ते कृण्वन्तु भेषजम् । इत्यापोहिष्ठेति च तिसृभिरथैनां सूर्य्यमुदीक्षयति तच्चक्षुरिति। अथास्यै दक्षिणांसमपि हृदयमालभते मम व्रते इत्यादिभिरीति । अथ सूत्राणामर्थः । निष्क्रमणप्रभृतीति निष्क्रमणकालादारभ्याग्नेर्दक्षिणतस्तिष्ठेदन्यः उत्तरतः अनेनैकेषां मते दक्षिणतः एकेषां मते उत्तरतः। अयं भावः। पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीत्यादि कालमारभ्य कश्चित्पुरुषो जलपूर्णं कलशं स्कन्धे निधाय वधूवरयोः पृष्ठत आगत्याग्नेर्दक्षिणस्यां दिशि मौनी तिष्ठेत्। केषांचिन्मते उत्तरतः। अतो विकल्पः। ततः कुम्भजलमानीय एनां वधूं मूर्ध्नि वरोऽभिषिञ्चति चतसृभिर्ऋग्भिरिति । आपः शिवाः शिवतमाः इत्याद्येका आपोहिष्ठेत्यादि तिस्रः इति चतुर्भिर्मन्त्रैरभिषिञ्चति । अयमाशयः । ततस्तस्मात्स्कन्धस्थितादुदकुम्भादाचारादाम्रपल्लवसहितेन हस्तेन जलमादाय एनां वधूं मूर्ध्नि शिरस्यभिषिञ्चति वरः आपः शिवा इत्यादिभेषजमित्यन्तेन मन्त्रेण । पुनस्तथैवोदकमादाय आपोहिष्ठेत्यादि आपो जनयथाचन इत्यन्ताभिस्तिसृभिर्ऋग्भिरभिषिञ्चतीत्यनुषज्यते । अथ मन्त्रार्थः । आपः शिवा इति मन्त्रस्य प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवता अभिषेचने विनियोगः। अथ मन्त्रस्यार्थः। या आपः शिवाः कल्याणहेतवः शिवतमाः अतिशयकल्याणकारिण्यः शान्ताः सुखकर्त्र्यः शान्ततमाः परमानन्ददात्र्यः ता आपस्ते तव भेषजमारोग्यं कृण्वन्तु कुर्वन्तु। " कृञ् हिंसाकर-

शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मात-रस्तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ आ-पो जनयथाचन इति तिसृभिर्वधूमात्मानं चाभिषि-ञ्चति इति ।

ततः सूर्य्यमुदीक्षस्वेति वधूं सम्बोधयति वरः । तच्च-क्षुरित्यृचं पठित्वा वधूः सूर्य्यं पश्येत् । तद्यथा । तच्च-

णयोः" इति धातो रूपम् । स्वादिगणे इति ज्ञेयम् । आपोहिष्ठेत्यादि तिसृणां सिन्धुद्वीप ऋषिर्गायत्री छन्दः आपो देवता मार्जने विनियोगः । अथ तिसृ-णामर्थः । आपोहिष्ठेति । हे आपः प्रसिद्धा अनुभूताश्च मां यूयं मयोभुवः मय इति सुखनाम तस्य भावित्र्यो भवथ सर्वप्राणिनामपीति शेषः । ऊर्ज्जे बलाय अन्नाद्युपयोगाय च दधात धारयत । नेति काक्वर्थेन दधातेति अपि तु दधातैव महे महते परं ब्रह्मणे रणाय रम्याय चक्षसे दर्शनीयाय यो वः शिवतमो रस इति यः शिवतमः परमसुखरूपो वो युष्माकं रसः तस्येति द्वितीयार्थे षष्ठी । नेतरं रसं इह संसारे नोऽस्मान् भाजयत प्रापयत । अपां रसो हि परंब्रह्मरूपः शिवतमो मतः स यथायोग्यं त्रैवर्णिकैरभ्यर्च्यते । उशतीरिव मातरः यथा उशतीः कमनीयाः प्रशस्ता मातरो जनन्यो बालानां वृद्धिं कामयमाना वात्सल्यातिशयात्स्तन्यपानादिरसं क्षीरादिकं भोजयन्ति तद्वदित्यर्थः । तस्मा इति । तस्मै तदर्थं अरं तूर्णं वयं गमाम गच्छाम यस्य पापस्य क्षयाय यूयं जिन्वथ उत्पादयत हे आपः जनयथा-चनः साकल्येन मोक्षप्राप्तियोग्यान् जनयध्वं महानुभावत्वात् इति । ततः सूर्यमुदीक्षस्वेति । अत्रापि सूत्रं प्रमाणयति । अथैना॰ सूर्यमुदीक्षयति तच्चक्षुरिति । अस्यार्थः । अथैनामुदीक्षयतीति कारितार्थत्वाद्वरस्याध्येषणा सूर्यमुदीक्षस्वेति । ततस्तच्चक्षुरिति मन्त्रेणोदीक्षेत सा दिवा विवाहे । अयमाशयः । अथाभिषेकादुपरि सूर्यमुदीक्षयति प्रेषेण सूर्य एनां वधूं वर उदी-

क्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्पश्येम शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः शतं प्रब्रु-वाम शरदः शतमदीनाः स्याम शरदः शतं भूय-श्च शरदः शतात् इति पठित्वा वधूः सूर्य्यं पश्यति। अस्तंगते सूर्य्ये ध्रुवमीक्षस्व इति प्रैषानन्तरं ध्रुवं पश्यामीति ब्रूयात्। तत्र वरपठनीयो मन्त्रः। ॐ ध्रु-वमसि ध्रुव त्वा पश्यामि ध्रुवैधि पोष्यामि मह्यं त्वादाद्बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः

क्षयति । सूर्यस्य निरीक्षणं कारयतीत्यर्थः । सा च वरप्रेरिता सती तच्चक्षुरिति मन्त्रेण स्वयं पठितेन सूर्यं निरीक्षते । दिवा विवाहपक्षे इति । अथ मन्त्रः । तच्चक्षुरित्यक्षरातीति पुरउष्णिक् छन्दो दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता सू-र्योपस्थाने विनियोगः । अथ मन्त्रार्थः । तच्चक्षुरिव चक्षुः देवाहितं सर्वेन्द्रि-योपकारकं सकलदेवहितं वा यस्योदयेन स्वाहास्वधाप्रवृत्तौ सर्वे देवाः पितरश्च तृप्यन्ति नित्यनैमित्तिकसर्वकर्मप्रवृत्तिहेतुत्वात् सर्वेषां जीवभू-तम् । तथाच श्रुतिः । तमिस्राजगरग्रस्तं भूतलं जीवयति योऽसौ तपन्नुदेति इत्यादि । किञ्च पुरस्तादादौ शुक्रं कामादिमलरहितं अविद्यादोषरहितं उच्चरत् उदयं गत्वोर्ध्वं गच्छत् शरदः शतं शतं समाः पश्येम जीवेमेति सूर्योपासनाफलमेतदाहाथास्तंगते सूर्ये । निशाविवाहपक्षे ध्रुवमीक्षस्व इति प्रैषानन्तरं ध्रुवं पश्यामि इति ब्रूयात्सा । तत्र निशाविवाहपक्षे वरपठनीयो मन्त्रः । अथ मन्त्रमाह । ध्रुवमसीति । ध्रुवमसीति मन्त्रस्य परमेष्ठी ऋषिः पंक्तिः छन्दो प्रजापतिर्देवता ध्रुवदर्शने विनियोगः । अथ मन्त्रार्थः । ध्रुवमसीति । हे ध्रुव त्वं निश्चलमविनश्वरं स्थानं समागत इति शेषः । अहं त्वां ध्रुवं निश्चलं तारकाविशेषरूपं वा पश्यामि । एतन्निरूपणप्रयोजनमाह । यथायं स्वस्थाने

शतमिति पठेत् । अथ वरो वधूदक्षिणांसस्योपरि हस्तं नीत्वा तस्या हृदयमालभेत मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं तेऽस्तु मम वाचमेकमना जुषस्व प्रजापतिर्ष्ट्वा नियुनक्तु मह्यमिति मन्त्रेण । अथ वधू-

ध्रुवोऽस्ति तथा हे वधूः त्वमपि विवाहकर्त्तरि ध्रुवा निश्चला एधि भवेत्यर्थः । पोष्या च मम पुत्रपौत्रादिसन्ततिपुष्टिकर्त्री च भवेत्यर्थः । बृहस्पतिः बृहतां मरीच्यादीनां पतिर्बृहस्पतिर्ब्रह्मा मह्यं वैवाहिकेन विधिना त्वा त्वां अदात् पत्नीत्वेन दत्तवान् त्वञ्च प्रजावती पुत्रपौत्रादिसन्ततिमती मया पत्या सह शरदः शतं समाः संजीवेत्याशंसावाक्यार्थः । यद्वा हे ध्रुव त्वं ध्रुवोऽसि शाश्वतोऽसीति ततस्त्वा त्वां ध्रुवं प्रशाश्वततारकाविशेषं पश्यामि अत्रांतर्भूतो णिच् ज्ञेयः । यतोऽहं पतिर्ध्रुवं शाश्वतं त्वा त्वां दर्शयामि अतस्त्वमपि ध्रुवा शाश्वती एधि भवेति भावः । तथा च पोष्या पोषणीया मत्प्रजापोष्ट्री वा भव । यद्वा पोष्या एधि मत्सन्तानवर्द्धनकरी भवेत्यर्थः । एतदर्थमेव बृहस्पतिर्मह्यं त्वामदादित्याद्यग्रे समानमेव ज्ञेयम् । सा च पश्यामीति ब्रूयात् । अयमाशयः । सा वधूर्यद्यपि ध्रुवं नेक्षेत तथापि पश्यामीत्येवमेव वदेत् न विपरीतमित्यर्थः । न न पश्यामीति ब्रूयात् । अथ वरो वधू इति । अत्रापि सूत्रं प्रमाणयति । अथास्यै दक्षिणांऽसमधिहृदयमालभते मम व्रते ते हृदयमित्यादिना नियुनक्तु मह्यमित्यन्तेन मन्त्रेण । अस्यार्थः । अथ सूर्योदीक्षणानन्तरं अस्यै इति षष्ठ्यर्थे चतुर्थी । अस्या वध्वा दक्षिणांसमधि दक्षिणस्य स्कन्धस्योपरि स्वबाहुं नीत्वा तस्या हृदयमालभते स्पृशति वरो मन्त्रमाह । मम व्रते इत्यादि मन्त्रस्य परमेष्ठी ऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता हृदयालम्भने विनियोगः । हे पत्नि इत्यध्याहारः । मम व्रते मम शास्त्रविहितनियमाचरणे ते तव हृदयं मनो बृहतां पतिर्मरीच्यादीनां शास्ता ब्रह्मा दधातु धारयतु । किञ्च मम चित्तमनु मच्चित्तानुकूलं

# माभिमन्त्रयाति वरः । सुमङ्गलीरियं वधूरिमा९ँ समेत पश्यत सौभाग्यमस्यै दत्वा याथास्तं विपरेतनेति मन्त्रेण । अथ स्विष्टकृद्धोमः । ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते । अत्र स्रुवावशिष्टाज्यस्य प्रोक्षणीपात्रे प्रक्षेपः । अयञ्च होमो ब्रह्मणान्वारब्ध-

ते तव चित्तमस्तु त्वं च मम वाचं वचनं एकमना अव्यभिचारिमनोवृत्तिर्जुषस्व हृष्टचित्तादरेण कुरुष्व त्वां च स एव बृहस्पतिर्मह्यं मदर्थं मां प्रसादयितुं नियुनक्तु नियोजयत्विति भावार्थः । अथवा लङि लोट् निर्देशः नियुनक्त्विति कोऽर्थः न्ययुङ्क्तेति तात्पर्य्यार्थः । अथ वधूमिति । अत्राऽपि सूत्रं प्रमाणयति अथैनामभिमन्त्रयते सुमङ्गलीरिय वधूरित्यादिना याथास्तं विपरेतनेत्यन्तेन मन्त्रेणेति । अस्यार्थः । अथ हृदयालम्भनानन्तरमेनां वधूं वरोऽभिमन्त्रयते सुमङ्गलीरिति मन्त्रेण । अथ मन्त्रस्यार्थः । सुमङ्गलीरिति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो विवाहाधिष्ठात्र्यो देवता अभिमन्त्रणे विनियोगः । अथ मन्त्रार्थः । हे विवाहाधिष्ठात्र्यो गौरीपद्माशचीप्रभृतयः इयं वधूः सुमङ्गलीः शोभनमङ्गलरूपविवाहसंयुता विसर्गः छान्दसः अत इमां वधूं यूयं समेत सङ्गच्छत सङ्गत्य च इमां पश्यत दृष्ट्या विलोकयत । किञ्च अस्यै सुमङ्गल्यै नवोढायै सौभाग्यं दानमानाद्यन्वितसुसम्पदां समृद्धिं दत्त्वा याथ गच्छत अस्तं गृहं विपरेतन विमुखतया मा परा इत अपगच्छत किन्त्वस्याः पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजतेत्यर्थः । वेश्मास्तगृहमालये इति रन्तिकोशः । विपरेतनेत्यत्र विपरापूर्वेण्धातोर्लोट् मध्यमपुरुषबहुवचनस्थाने तनप् आदेशः । दत्वा येत्यत्र दत्वा पृथक् पदं क्त्वान्तं याथ इति यातेति पदस्यादेशः छान्दसः । अथानन्तरं सौभाग्यमस्यै दत्वा स्वगृहं याथ इति यातेत्यर्थः । अथ स्विष्टकृद्धोमः । अथागत्य यथास्थानमुपविश्य ब्रह्मणान्वारब्धः स्विष्टकृ-

कर्तृकः । अथ संस्रवप्राशनम् । तत आचम्य पूर्णपात्रं दक्षिणां ब्रह्मणे दद्यात् । ॐ अद्य तत्सादित्यादि कालज्ञानं कृत्वा कृतैतद्धोमकर्म्मकृताकृतावेक्षण-रूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापति-दैवतममुकगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं संप्रददे इति ब्रह्मणे दक्षिणां दद्यात् । स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थिवि-मोकः । अत्र ग्रामवचनं कुर्याद्वरः । ग्रामशब्दवा-

द्धोमं विधाय संस्रवं प्राश्य ब्रह्मणे पूर्णपात्रवरयोरन्यतरं च दक्षिणात्वेन दत्वा स्वकीयाचार्य्याय ब्राह्मणः परिणेता गां वरं ददातीति श्रुतेः वर-शब्देन किमभिधीयते तदाह । गौर्ब्राह्मणस्य ग्रामः क्षत्रियस्याश्वो वैश्यस्य शूद्रस्य यथाशक्ति इति । दुहितृमते यस्य दुहितर एव न पुत्रस्तस्मै चा-धिकं गवां शतं दत्वा तद्दुहितरमुद्वहेत् प्रतिषिद्धा ह्यसौ नाभ्रातृकामुपग-च्छेत् इति श्रुतेः । तथा च यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां कन्यां पुत्रिकाधर्म्मशङ्कया ॥ १ ॥ इति मनुस्मरणात अभ्रातृ-मतीपरिणयनं निषिद्धम् । तदतिक्रम्य यदि कश्चित्तामुद्वहेत्तदा तस्याः पुत्रिकाधर्म्माशङ्कात्वदोषपरिहाराय एकेन च रथेनाधिकं गवां शतं तत्पित्रे दत्वा उद्वहेत् । अत्र ग्रामवचनमिति । अत्र विवाहे ग्राम-शब्दवाच्यानां स्वकुले वृद्धानां स्त्रीणां वचनं वाक्यं प्रमाणं कुर्य्युः । अंकुरार्पणहरिद्राक्षतारोपणचन्दनादिधर्म्मप्रतिपादकं अङ्गीकुर्य्युः । श्म-शाने च मरणे वृद्धस्त्रीवचनं शास्त्रातिरिक्तमपि प्रमाणं चक्रुरित्यर्थः । अत्राऽपि प्रमाणं दर्शयति । विवाहश्मशानयोर्ग्रामं प्रविशतादिति व-चनात् तस्माद्ग्रामः प्रमाणमिति । अस्यार्थः । कुतः शास्त्रातिरिक्तं प्र-माणमिति चेच्छृणु । ग्रामं प्रविशतादिति वचनाद्धेतोः तस्मादित्यादि

च्याः स्वकुलवृद्धाः स्त्रियः । सुमित्रिया न आप ओषधयस्सन्तु इति प्रणीताजलेन पवित्रे गृहीत्वा शिरः संमृज्य दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्यैशान्यां सपवित्रां सजलां प्रणीतां न्युब्जीकुर्यात् । ततः स्तरणक्रमेण बर्हिरुत्थाप्य आज्येनावघार्य वक्ष्यमाणमन्त्रेण हस्तेनै-

श्रुतेश्च युक्तिमप्याह । यतः कुलवृद्धाः स्त्रियः पूर्वपुरुषानुष्ठीयमानमाचारं स्मरन्ति तस्मात्तयोर्विवाहश्मशानयोर्ग्रामः प्रमाणं सदाचारबोधकमित्यर्थः । सुमित्रिया इति । सुमित्रिया न इति मन्त्रस्य यामित्र ऋषिरनुष्टुप्छन्दो मित्रो देवता मार्जने विनियोगः । अथ मन्त्रार्थः । आपः पानानि ओषधयश्चान्नानि नोऽस्माकं सुमित्रियाः परमसुखकरा भवन्तु । अथ स्मृतिवचने प्रणीतापात्रे पूर्वकल्पिते । तदद्भिः कं प्रमृज्याशु सर्वपापैः प्रमुच्यते इति जाबालिः । पवित्रे । प्रणीतातः पवित्रे गृहीत्वा शिरः संमृज्यात् इति । दुर्मित्रिया इति दुर्मित्रियास्तस्मै इति मन्त्रस्य विश्वामित्र ऋषिस्त्रिष्टुप् छन्दो दुर्द्धर्षभैरवो देवता प्रणीतापात्रपातने विनियोगः । अथ मन्त्रार्थः । योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः तस्मै पुरुषाय आप ओषधयोऽन्नपानानि इत्यध्याहारः दुर्मित्रिया दुःखदायका भवन्त्वित्यर्थः । इतिमन्त्रेणैशान्यां सपवित्रां सजलां प्रणीतां न्युब्जीकुर्य्यात् । ननु निषिद्धस्य द्वेषस्य करणे विधिः कथम् । तत्राह । स्वयं द्वेषकरणे निषेधोऽपि य आत्मानं द्वेष्टि तं प्रतिद्वेषोऽदोषायैवेति । तदुक्तं राजनीतौ । शठं प्रतिशठं कुर्य्यादादरं प्रति चादरम् । त्वया मे लुण्ठितौ पक्षौ मया ते मुण्डितं शिरः ॥१॥ इति गृहस्थे राजनीतिवृत्तिवद्वर्त्तमानत्वेन द्वेषोऽपि विधिरेवेति । अथ बर्हिरुत्थापनम् । यज्ञे विवाहे होमे तु कुशानास्तृणुयात्सदा । अग्नेर्दोषविनाशाय पुण्यस्यातिशयाय च ॥१॥ ततस्तरणक्रमेणैतद्बर्हिरुत्थापयेत्सुधीः ।

व जुहुयात् । देवा गातुविदो गातु वित्वा गातुमित मनसस्पत इमं देवयज्ञꣳ स्वाहा वातेधाः स्वाहा । इति बर्हिर्होमः ॥ तत उत्थाय वध्वा दक्षिणहस्तेन स्पृष्टैः स्रुवस्थघृतपुष्पफलैः पूर्णाहुतिं कुर्यात् । तत्र मंत्रः । मूर्द्धानमित्यस्य भारद्वाज ऋषिर्वैश्वानरो देवता त्रिष्टुप् छन्दः पूर्णाहुतिहोमे विनियोगः । ॐ मूर्द्धानं दिवोऽरतिं पृथिव्या वैश्वानरमृतमजात-

अभिघार्य्य घृतेनैतद्धुनेदग्नौ करेण वै । इति वसिष्ठवचनाद्विधिः । तत्र मन्त्रः । देवा गातुविदो गातु इत्यादि । अथ मन्त्रार्थः । हे देवा यूयं गातुविदः । गातुरिति यज्ञस्य नाम । तथाच यूयं यज्ञवेत्तारः । यज्ञस्वरूपं विष्णुरिव सर्वप्रतिपोषकं यज्ञफलं ज्ञानविज्ञानयज्ञनिष्ठां सर्वश्रेयमीं इति यूयं विजानीत इति हेतौ यूयं गातुं यज्ञं विष्णुं वित्वा विदित्वा गातु सुखं गच्छतेत्यर्थः । यज्ञो वै विष्णुरिति श्रुतिः । गात्विति " गाङ् गतौ " इत्यस्य रूपम् । हे देव अतो मनसस्पतेन्तऽर्यामिन ब्रह्मस्वरूप इमं यज्ञं यज्ञफलं स्वाहा त्वदर्प्पणं स्यात् त्वं वातेधाः वातेन पवनेन इधा इति वह्नि-विशेषणम् । ब्रह्मरूपे तु वातेन सर्वगेनापरिच्छिन्नेन स्वरूपेणेद्धः प्रकृष्टः स्वाहा इति कुशानां होमार्थः शब्दः । अथ पूर्णाहुतिविधिः । विधाने पूर्णे सत्याहुतिर्या सा पूर्णाहुतिरिति व्युत्पत्तिः । यद्वा पूर्ण ईश्वरस्तस्मै या आहुतिः सा पूर्णाहुतिरिति । तत्र प्रमाणमाह । वधूदक्षकरस्पृष्टे स्रुवे संस्थापयेद्वरः । घृतपुष्पफलादीनि पूर्णार्थाञ्चाहुतिं ददेत् । इति बृह-द्वसिष्ठप्रणीतत्वात् । तत्र मन्त्रः । मूर्द्धानमिति । अथ मन्त्रार्थः । दिव उपरिस्थलोकानां सर्वेषां मूर्द्धानं उपरिभवं सर्वलोकसंस्थातः परं देशप-रिच्छेदशून्यमित्यर्थः । पुनः पृथिव्या अरतिं पृथिवीत्युपलक्षणम् । पञ्चभू-तानां तथा च पञ्चभूतकार्य्यब्रह्माण्डोदरस्थलोकेषु अरतिं अनासक्तिं तथा

माग्निं कविंꣳसम्राजमतिथिं जनानामासन्ना पात्रं जनयन्तु देवाः स्वाहा इदमग्नये । तत उपविश्य स्रुवेण भस्मानीय दक्षिणानामिकाग्रेण । त्र्यायुषं जमदग्ने इति ललाटे । कश्यपस्य त्र्यायुषं इति ग्रीवायां । यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले । तन्नो अस्तु त्र्यायुषं इति हृदये । अनेनैव क्रमेण वध्वा अपि

च पाञ्चभौतिकदेहेन्द्रियादिष्वपि अरतिं इति वैराग्यातिशयत्वम् । वैश्वानरं वैश्वानरसंज्ञं ब्रह्माण्डचेतयितारमीश्वरं ऋतं सत्यस्वरूपं अजातं जन्मादिषड्भावविकारशून्यं निर्विकारं अग्निं प्रकाशस्वरूपं कविं सर्वज्ञं सम्राजं निरतिशयानन्दम् । एतैर्विशेषणैः सच्चिदानन्दस्वरूपं ब्रह्म सर्वाधिष्ठानं बोध्यते । अतिथिं तिथिशब्दः कालोपलक्षकः । नञा समासेन कालातीतत्वबोधः अकालमित्यर्थः । जनानां सर्वेषां लोकानां आसन्नापात्रं सृष्टिप्रलययोराधारत्वेन पात्रं सर्वेषां स्थितिस्थानं कूटस्थमिति भावः । जनयन्तु देवा इति यो देवान् जनयित्वा स्वस्वव्यापारेषु अन्तर्यामितया प्रेरयति । देवा इति द्वितीयार्थे प्रथमा छन्दसि स्यादिसर्वत्रेति वचनात् । जनयन्त्विति जनिधातोरुत्पादनबोधः प्रेरणार्थप्रत्ययेन तत्प्रेरणत्वं बोध्यते । इत्यलं बहुनेति । तस्मै स्वाहा एष बलिरिति पूर्णरूपेश्वरार्चया पूर्णत्वं बोध्यते । भस्मोपविश्य चादाय स्रुवेणाहुतद्रव्यतः । आशीरूपैश्चोक्तमन्त्रैः स्वपराङ्गेषु लेपयेदिति योगियाज्ञवल्क्योक्तेः । तत उपविश्येत्यादि विधिः । अथाङ्गदर्शनपूर्वक अर्थेन सहैव मन्त्रानाह । त्र्यायुषमिति । यावज्जमदग्नेरायुःप्रमाणमासीत् ततस्त्र्यायुषं त्रिगुणप्रमाणमायुर्मे स्यात् । अयमर्थः । आत्माङ्गविलेपने । पराङ्गविलेपने तु मे स्थाने ते तव स्यात् । इति ललाटे । एवं कश्यपस्य त्र्यायुषं इति ग्रीवायाम् । यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले । तन्नो-

**त्र्यायुषं कुर्यात्। तत्र तन्नो इत्यस्य स्थाने तत्ते इति विशेषः। तत आचाराच्छणशङ्खशमीपुष्पाद्राक्षतारोपणरूपसिन्दूरकरणं वरः कुर्यात् ॥**

ऽस्तु त्र्यायुष इति हृदये। अर्थस्तु तथैवेति। एवमेव वध्वा अपि त्र्यायुषं कुर्यात्। तत्र तन्नो इति स्थाने तत्ते इति विधिः। मङ्गलार्थं वधूशिरसि वरः शणसुवर्णशङ्खेन सिन्दूरकरणं कुर्यात् इति। तथाहि। सुवर्णशणयुक्तेन वध्वाः शङ्खेन मूर्द्धनि। सिन्दूरकरणं कुर्यात् सुवर्णार्थं स्वयं वरः। इति बृहद्वासिष्ठस्मृतिवचनम्। तत आचारात्पुष्पशमीपत्राद्राक्षतारोपणं वधूवरयोः शिरसि दद्यात्। नो वै विजह्यात्कुलदेशधर्म्मान् इति वचनात्। अथ वारुणमहाकलशाभिषेकः। प्रथमं सकलदेवतार्थान्यावाह्य प्रतिष्ठाप्य पूजयेत्। तत्र वरुणं गङ्गादितीर्थानि चावाहयेत्। भो भो जलेश वरुण सर्वकार्य्यप्रसाधक। इहागच्छ इहातिष्ठ सन्निधानं कुरु प्रभो १ वरुणमावाह्य प्रतिष्ठाप्य च तत्रैव तीर्थान्यावाहयेत् वक्ष्यमाणमन्त्रैः। गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च। आयान्तु यजमानस्य दुरितक्षयकारकाः। ततो वरुणाय जलेशाय जलस्थाय देवाय आसनं नमः १ पाद्यं नमः २ अर्घो नमः ३ आचमनीयं नमः ४ स्नानं नमः ५ वस्त्रं नमः ६ गन्धो नमः ७ पुष्पं नमः ८ धूपो नमः ९ दीपो नमः १० नैवेद्यं नमः ११ पुनराचमनीयं नमः १२ नमस्कारो नमः १३ दक्षिणा नमः १४ इति सम्पूज्य वरुणम्। अथ गङ्गादितीर्थानि सम्पूजयेत्। गङ्गादिसर्वतीर्थेभ्यो नमः आसनं नमः पाद्यं नमः अर्घो नमः आचमनीयं नमः स्नानं नमः वस्त्रं नमः गन्धो नमः पुष्पं नमः धूपो नमः दीपो नमः नैवेद्यं नमः पुनराचमनीयं नमः नमस्कारो नमः दक्षिणा नमः इत्येवं तीर्थानि सुपूजयेत्। अथ वारुणकलशाज्जलमानीय पञ्चपल्लवैः कुशैरेव वा वरं वधूं च ब्राह्मणा अभिषिञ्चेयुर्वक्ष्यमाणमन्त्रैः। सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते। आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतिस्तथा ॥ २ ॥

वरुणः पवनश्चैव धनाध्यक्षः शिवस्तथा । ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीधृतिर्मेधा पुष्टिः श्रद्धा क्रिया रतिः । बुद्धिर्ज्योतिर्वपुर्ऋद्धिस्तुष्टिर्ह्रीष्टिश्च मातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यचन्द्रभौमाश्च बुधजीवसितार्कजाः ॥५॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुस्तथैव च । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥६॥ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥७॥ अस्त्राणि चैव शस्त्राणि शतशो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥८॥ सरितः सागराः शैलास्तीर्थानि जलदास्तथा । एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये ॥९॥ इति वारुणकलशाभिषेकः ॥ अथ पुष्पार्द्राक्षतारोपणम् । आशीर्वचनपूर्वकं सर्वे सामाजिकाः स्त्रियः पुरुषाश्च पुष्पाणि संगृह्य एकैकं पुष्पमादाय ब्राह्मणकर्तृकमन्त्राध्ययनं श्रुत्वा तथा त्वं भव भर्त्तरीति ब्राह्मणोक्तमन्त्रान्ते स्वयमप्युक्त्वा प्रथमं वध्वा उपरि प्रक्षिपेयुरिति । अथ मन्त्राः । गायत्री च विधौ यद्वल्लक्ष्मीर्देवपतौ यथा । उमा यथा महेशाने तथा त्वं भव भर्त्तरि ॥१॥ सुवर्चला यथा चार्के यथा चन्द्रे तु रोहिणी । मदने च रतिर्यद्वत्तथा त्वं भव भर्त्तरि ॥ २ ॥ सुदक्षिणा दिलीपे तु राघवे तु विदर्भजा । अरुन्धती वसिष्ठे च तथा त्वं भव भर्त्तरि ॥ ३ ॥ राघवेन्द्रे यथा सीता विनता कश्यपे यथा । पावके च यथा स्वाहा तथा त्वं भव भर्त्तरि ॥ ४ ॥ अनिरुद्धे यथैवोषा दमयन्ती नले यथा । श्यामली चर्तुपर्णे च तथा त्वं भव भर्त्तरि ॥ ५ ॥ पुलोमजा च देवेन्द्रे वसुदेवे च देवकी । लोपामुद्रा यथाऽगस्त्ये तथा त्वं भव भर्त्तरि ॥ ६ ॥ छाया यथैव चादित्ये यथा वेन्दौ च रोहिणी । रोहिणी वसुदेवेऽपि तथा त्वं भव भर्त्तरि ॥७॥ शन्तनौ च यथागङ्गा सुभद्रा च यथाऽर्जुने । धृतराष्ट्रे च गान्धारी तथा त्वं भव भर्त्तरि ॥ ८ ॥ गौतमे च यथाऽहल्या द्रौपदी पाण्डवेषु च । यथा वालिनि तारा च तथा त्वं भव भर्त्तरि ॥ ९ ॥ मन्दोदरी रावणे च रामे यद्वत्तु

जानकी । पण्डुराजे यथा कुन्ती तथा त्वं भव भर्त्तरि ॥ १० ॥ अत्रौ यथा-नसूया च जमदग्नौ च रेणुका । श्रीकृष्णे रुक्मिणी यद्वत्तथा त्वं भव भर्त्तरि ॥ ११ ॥ भास्करे च प्रभा यद्वज्ज्योतिष्णा च यथा पतौ । नदीशे च यथा गङ्गा तथा त्वं भव भर्त्तरि ॥ १२ ॥ मेना हिमालये यद्वन्मेरौ मरुवती तथा । शिशुमारे भ्रमीर्यद्वत्तथा त्वं भव भर्त्तरि ॥ १३ ॥ संवरे तपनी यद्वद्भरते च शकुन्तला । मेरुदेवी यथा नाभौ तथा त्वं भव भर्त्तरि ॥ १४ ॥ ईश्वरे प्रकृतिर्यद्वत्कालिका भैरवे यथा । अम्बिका च मृडे यद्वत्तथा त्वं भव भर्त्तरि ॥ १५ ॥ रेवती बलभद्रे च साम्बे च लक्ष्मणा तथा । रु-क्मिसुता कृष्णपुत्रे तथा त्वं भव भर्त्तरि ॥ १६ ॥ सर्पराजसुताऽनन्ते भारती च प्रजापतौ । सत्यभामा यथा कृष्णे तथा त्वं भव भर्त्तरि ॥ १७ ॥ जान-की च तथा रामे ऊर्मिला लक्ष्मणे यथा । कुशे कुमुद्वती यद्वत्तथा त्वं भव भर्त्तरि ॥१८॥ धनपुत्रवती साध्वी सततं भर्तृवत्सला । मनोज्ञा ज्ञानसहिता तिष्ठ त्वं शरदां शतम् ॥ १९ ॥ जीवत्सूर्वीरसूर्भद्रे भव सौख्यसमन्विता । भाग्यारोग्यसुसम्पन्ना यज्ञपत्नी पतिव्रता ॥ २० ॥ अतिथीनागतान्साधू-न्बालान् वृद्धान् गुरूंस्तथा । पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ २१ ॥ पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते । त्वं तान्याप्नुहि कल्याणि सुखिनी शरदां शतम् ॥ २२ ॥ एभिर्मन्त्रैर्वधूमाशीर्भिः संवर्ध्य पुष्पार्द्राक्षतारोपणं विधाय वक्ष्यमाणमन्त्रैरार्द्राक्षतपुष्पारोपणं स्त्रियः पुरु-षाश्च वरस्याऽपि कुर्य्युः । अथ मन्त्राः । ब्रह्मा वेदपतिः शिवः पशुपतिः शक्रः सुराणां पतिः प्राणो देहपतिः सदागतिरयं ज्योतिष्पतिश्चन्द्रमाः । अ-म्भोधिः सरितां पतिर्जलपतिः सूर्यो ग्रहाणां पतिः सर्वे ते पतयः कुबेर-सहिताः कुर्वन्तु ते मङ्गलम् ॥ १ ॥ मत्स्यः कूर्म्मतनुर्वराहनृहरी श्रीवामनो भार्गवस्तद्वद्दाशरथिश्च यादवपतिर्बुद्धोऽथ कल्कीपतिः । अन्ये चापि सन-त्कुमारकपिलप्राणाः कलांशा हरेः सर्वे ते कलिकल्मषापहरणाः कुर्वन्तु ते मङ्गलम् ॥२॥ आदित्योऽग्नियुतः शशी सवरुणो भौमः कुबेरान्वितः

**अथ ता दृढपुरुषो ब्राह्मणोऽन्यो वा उन्मथ्य प्राग्वोदग्वाऽनुगुप्त आगारे आनडुहे आर्षभे रोहिते उत्तरलोम्नि चर्म्मण्युपवेशयाति। इह गावो निषीद-**

सौम्यो विश्वयुतो गुरुः समधवा देव्या युतो भार्गवः । सौरिः केतुयुतः सदा सुरवरो राहुर्भुजङ्गेश्वरो माङ्गल्यं सुखदुःखदानानिरताः कुर्वन्तु सर्वे ग्रहाः ॥ ३ ॥ गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्म्मदा कावेरी शरयूर्महेन्द्रतनया चर्मण्वती वेदिका। क्षिप्रा वेत्रवती महासुरनदी ख्याता च या गंडकी पूर्णाः पूर्णजलैः समुद्रसहिताः कुर्वन्तु ते मङ्गलम् ॥ ४ ॥ आयुर्द्रोणसुते श्रियो दशरथे शत्रुक्षयो राघवे ऐश्वर्य्यं नहुषे गतिश्च पवने मानं च दुर्योधने । शौर्य्यं शान्तनवे बलं हलधरे सत्यं च कुन्तीसुते विज्ञानं विदुरे भवन्तु भवतः कीर्तिश्च नारायणे ॥ ५ ॥ आयुष्मान् भव पुत्रवान्भव भव श्रीमान् यशस्वी भव प्रज्ञावान्भव भूरिभूतिकरुणो दानैकनिष्ठो भव । तेजस्वी भव वैरिदर्प्पदलनव्यापारदक्षो भव श्रीशम्भोर्भव पादपूजनरतः सर्वोपकारी भव ॥ ६ ॥ आयुर्बलं विपुलमस्तु सुखित्वमस्तु सौभाग्यमस्तु विशदा तव कीर्तिरस्तु । श्रेयोऽस्तु धर्म्ममतिरस्तु रिपुक्षयोऽस्तु सन्तानवृद्धिरभिवाञ्छितसिद्धिरस्तु ॥ ७ ॥ दीर्घायुर्भव जीव वत्सरशतं नश्यन्तु सर्वापदः स्वस्थं संभुज मुञ्च चञ्चलधियं लक्ष्म्यैकनाथो भव। किं ब्रूमो भृगुगौतमात्रिकपिलव्यासादिभिर्भाषितं यद्रामस्य पुराऽभिषेकसमये तच्चास्तु ते मङ्गलम् ॥ ८ ॥ यावदिन्द्रादयो देवा यावच्चन्द्रदिवाकरौ । यावद्धर्म्मक्रिया लोके तावद्भूयात्स्थितिस्तवेति । एवं वरस्याप्यार्द्राक्षतारोपणं विदध्युरिति । अथ तामिति । अथ सिन्दूरकरणानन्तरं तां वधूं दृढपुरुषो दृढाङ्गपुरुषो ब्राह्मणोऽन्यो वरो वा उन्मथ्य उत्थाप्य प्राक् पूर्वस्यां दिशि पूर्वकल्पितं मण्डपविधानवेलायामेव निर्म्मिते अनुगुप्ते वस्त्रादिनाच्छादिते आगारे गृहे तत्र च पूर्वमास्तीर्णे आनुडुहे आर्षभे ऋषिभिर्वेदोक्तविधैरङ्गी-

न्त्विहाश्वा इह पूरुषा इहो सहस्रदक्षिणो यज्ञे इह-
पूषा निषीदन्त्विति मन्त्रेण ॥ त्रिरात्रमक्षारालवणा-
कृते रोहिते लोहितवर्णे प्राग्ग्रीवे उत्तरलोम्नि चर्म्मण्यजिने उपवेशयति ।
स्मार्तकाना मते त्वेवम् वैष्णवानां तु विशेषः । वैष्णवपक्षे त्वयमर्थः
आनुडुहे अनुडुहशब्दवाच्यं मण्डनयुतभूषणाभूषितपतिपुत्रवतीबन्धुज-
ननारीसंयुक्तोज्ज्वलदीपम् प्रकीर्णान्नकणम् कौतुकागारम् तत्र भवं
आनुडुहम् तस्मिन्नानुडुहे । आर्षभे हिंसाप्रियदैत्यदानवव्यतिरिक्तशान्ति-
प्रियव्यासवसिष्ठनारदगौतमपराशरादिऋषिभिः शुचितया पवित्रत्वेनाङ्गी-
कृते रोहिते इति विवाहकौतुकोत्सुकसाहसवती योषिद्धरतपादसंलग्नर-
क्तपत्रिकमहावररागरञ्जिते चर्म्मणि शणसम्भवे टाटरूपे वस्त्रे प्राग्ग्रीवे
पौरस्त्योते उत्तरलोम्नि उत्तरप्रोते टाटवस्त्रे उपवेशयेदिति वैष्णवमतम् ।
तत्र प्रमाणम् । अनड्वान् वृषभः प्रोक्तस्त्वनड्वान्मुख्य आलये । नारीयुक्
प्रज्वलद्दीपमनुडुत्कौतुकं गृहम् । इति रन्तिकोशे शरीरावरके त्वचि चर्म्म-
शब्दो भण्यते । अत एवोक्तं चर्म्मणि द्वीपिनं हन्तीति । दुष्टाः परापकारं
कुर्वन्तीत्येव नो विद्धि शण इव निजचर्म्मपरान् हापयित्वा विप्रकुर्वन्ति ।
इत्यत्र शणो यथा निजचर्म हापयित्वा परान् हस्त्यश्वनरादीन् बन्धनादिना
विप्रकुरुते तथा दुष्टाः स्वयं मृत्वाऽपि परान् घ्नन्तीत्यर्थः । यथा मक्षि-
काः । अत्र चर्म्मशब्देन शणो भण्यते । ततश्चर्म्मणीत्यनेन कार्य्यकारण-
योरभेदाट्टाटरूपं वस्त्रं कार्य्यमुच्यते । किञ्च हिंसादिहीनत्वेन शुद्धत्वात्
वैष्णवमतं प्रशस्तम् । अथ मन्त्रः । इह गावो निषीदन्त्विति मन्त्रस्य प्रजाप-
तिर्ऋषिरनुष्टुप् छन्दो लिङ्गोक्ता अश्वपुरुषादयो देवता उपवेशने विनियोगः ।
अथ मन्त्रार्थः । इह वधूनिवेशने गावः अश्वाः पुरुषाश्च निषीदन्तु निव-
सन्तु । यथा वधूर्विशति तथात्र गोप्रभृतयो निवसन्त्विति । इह पदावृत्तिः
कर्तृणा सह किञ्च उ एवार्थे इहैव सहस्रं गावो दक्षिणा यस्य स
यज्ञः पूषा पुष्टिकरः पूषा वै सहस्रदक्षिणा आसेति श्रुतिः । त्रिरात्रमिति

शिनौ स्यातामधः शयीयाताम् निर्मिथुनौ स्याताम् ॥ इति विवाहपद्धतिः समाप्ता ॥

वधूवरौ त्रिरात्रं विवाहदिनमारभ्य त्रीण्यहोरात्राणि अक्षारालवणाशिनौ अक्षारञ्चालवणञ्च अक्षारालवणं तत् अशितुं शीलं ययोः तौ अक्षारालवणाशिनौ स्यातां अधःशयानौ अध इति खट्वाव्युदासो नास्तरणव्युदासः । आस्तृतभूमौ शयीत न खट्वायामित्याद्यृषिवचनात् । निर्मिथुनौ चात्र सूत्रादि प्रमाणयति । संवत्सरं न मिथुनमुपेयाता द्वादशरात्रं षड्रात्रं त्रिरात्रं त्रिरात्रमन्तत इति । अस्यार्थः । विवाहदिनमारभ्य संवत्सरं वर्षं यावत् मिथुनमभिगमनं नोपेयातां नोपगच्छेताम् । अथवा द्वादशरात्रं अथवा षड्रात्रं यद्वा त्रिरात्रं अन्ततः संवत्सरद्वादशरात्रषड्रात्राणामन्ते अशक्तौ त्रिरात्रमित्यर्थः । संवत्सरादिविकल्पास्तु शक्त्यपेक्षया व्यवस्थिताः । आतुराणां संवत्सरादित्यागाशक्तौ त्रिरात्रपक्षाश्रयोऽपि । अत्र हेतुः । चतुर्थीकर्म्मानन्तरं पञ्चम्यादिरात्रिषु अभिगमनं बोध्यम् । चतुर्थीकर्म्मणः प्राक् तस्या भार्य्यात्वमेव न संप्रवृत्तम् । विवाहैकदेशत्वाच्चतुर्थीकर्मणः । इति सूत्रार्थः । तस्माद्भार्य्या चातुर्थकर्म्मणीति मुनिवचनात् । आप्रदानात् भवेत्कन्या प्रदानानन्तरं वधूः । पाणिग्रहे तु पत्नी स्याद्भार्य्या चातुर्थकर्म्मणीति । इति मिश्रनिबाहूरामविरचिता विवाहपद्धतिः समाप्ता । श्रीदुर्गायै नमः ।

ॐ श्रीगणेशाय नमः ॥ अथ चतुर्थीकर्म्म । ततश्चतुर्थ्यां अपररात्रे चतुर्थीकर्म्म । तच्च गृहाभ्यन्तर एव कार्य्यम् । तत उद्वर्त्तनादि कृत्वा युगकाष्ठमुपविश्य स्नात्वा शुद्धवस्त्रं परिधाय गृहं प्रविश्य वधूवरौ प्राङ्मुखौ भवतः । ॐ गणपत्यादिदेवतापूजनम् । ततः कुशकण्डिकारम्भः । तत्र क्रमः । जामातृहस्तपरिमितां वेदीं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवेण वा प्रागग्रप्रादेशमात्रं त्रिरुत्तरोत्तरक्रमेणोल्लिख्योल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदमुद्धृत्य जलेनाभ्युक्ष्य तत्र

तूष्णीं कांस्यपात्रेणाग्निमानीय स्वाभिमुखं निदध्यात् । ततः पुष्पचन्दनताम्बूलवस्त्राण्यादाय ॐ अस्यां रात्रौ कर्त्तव्यचतुर्थीहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्म कर्त्तुं होतृकर्म्म कर्त्तुममुकगोत्रममुकशर्म्माणं ब्राह्मणमेभिः पुष्पचन्दनादिभिर्ब्रह्मत्वेन होतृत्वेन च त्वामहं वृणे इति ब्राह्मणं वृणुयात् । ॐ वृतोऽस्मीति प्रतिवचनम् । यथा विहितं कर्म्म कुरु इति वरेणोक्ते ॐ करवाणीति ब्राह्मणो वदेत् । ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्वा तदुपरि प्रागग्रान् कुशानास्तीर्य्य ब्रह्माणमग्निं प्रदक्षिणक्रमेणानीय ॐ अत्र त्वं मे ब्रह्मा भवेत्यभिधाय ॐ भवानीति ब्राह्मणेनोक्ते कल्पितासने उदङ्मुखं ब्रह्माणमुपवेशयेत् । ततः पृथूदकपात्रमग्नेरुत्तरतः प्रतिष्ठाप्य प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्य्यन्तम् । ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशात्रयम् । पवित्रकरणार्थं साग्रमनन्तरगर्भकुशपत्रद्वयम् । प्रोक्षणीपात्रं आज्यस्थाली । सम्मार्जनार्थं कुशत्रयम् । उपयमनार्थं वेणीरूपकुशत्रयम् । समिधस्तिस्रः स्रुवः । आज्यम् । षट्पञ्चाशदुत्तरवरमुष्टिशतद्वयावच्छिन्नामतण्डुलपूर्णपात्रम् । एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि । ततः पवित्रच्छेदनकुशैः पवित्रे च्छित्वा प्रादेशमितपवित्रकरणम् । ततः सपवित्रकरेण प्रणीतोदकं त्रिःप्रोक्षणीपात्रे निधाय अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे धृत्वा त्रिरुत्पवनम । ततः प्रोक्षणीपात्रस्य सव्यहस्तकरणं पवित्रे गृहीत्वा त्रिरुद्दिङ्गनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् । ततः प्रोक्षणीजलेन यथासादितवस्तुसेचनम् । ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रं निधाय आज्यस्थाल्यामाज्यानिर्वापः ततोऽधिश्रयणम् ततो ज्वलत्तृणादिना हविर्वेष्टयित्वा प्रदक्षिणक्रमेण पर्य्यग्निकरणम् । ततः स्रुवं प्रतप्य संमार्जनकुशानामग्रैरन्ततोमूलैर्बाह्यतः स्रुवसंमार्जनं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य स्रुवं

दक्षिणतो निदध्यात् । तत आज्यस्याग्नेरवतारणम् । तत आज्ये प्रोक्षणीवदुत्पवनम् । अवेक्ष्य सत्यपद्रव्ये तन्निरसनम् । पुनः पूर्ववत् प्रोक्षण्युत्पवनम् । उपयमनकुशान्वामहस्तेनादाय उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्ताः समिधस्तिस्रः क्षिपेत् । तत उपविश्य प्रोक्षणीजलेनाग्निं प्रदक्षिणं पर्य्युक्ष्य पवित्रं प्रणीतापात्रे धृत्वा ब्रह्मणान्वारब्धः पातितदक्षिणजानुर्जुहुयात् । तत्राघारादारभ्याहुतिचतुष्टयेन तत्तदाहुत्यनन्तरं स्रुवावस्थिताज्यं प्रोक्षिण्यां क्षिपेत् । **ॐ प्रजापतये स्वाहा** इदं प्रजापतये इति मनसा । **ॐ इन्द्राय स्वाहा इदमिन्द्राय** । इत्याघारौ । **ॐ अग्नये स्वाहा इदमग्नये** । **ॐ सोमाय स्वाहा** इदं सोमाय । इत्याज्यभागौ । तत आज्याहुतिपञ्चतये स्थालीपाकाहुतौ च प्रत्याहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः । ततो ब्रह्मणान्वारब्धं विना **ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वानाथकाम उपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा** । इदमग्नये । ॐ अग्ने प्रायश्चित्त इति । हे अग्ने प्रायश्चित्ते सकलदोषापहरणस्वरूप त्वं देवानामिन्द्रादीनां प्रायश्चित्तिरसि सर्वदोषापहर्ता भवसि अतःकारणात् ब्राह्मणोऽहं त्वा त्वां उपधावामि उपसर्प्पामि । अहं किंभूतः । नाथकामः याञ्चाकामः याञ्चार्थमुपसर्पामि इत्यर्थः । का याञ्चा । अस्यै अस्याः कन्यकायाः या तनूः पतिघ्नी यदङ्गं पतिहिंसकं अस्याः तां तनूं नाशय अपाकुरु तदपलक्षणमपाकुर्वित्यर्थः । हे अग्ने यतस्त्वं देवानामपि दोषापहर्त्ता अतो मदुपसर्पितः सन् अस्यास्तपदलक्षणं नाशयति वाक्यार्थः । अस्यै इति षष्ठ्यर्थे चतुर्थी ॥ १ ॥ **ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा** । इदं वायवे । वायो इति । हे वायो अस्याः या प्रजाघ्नी संतानविरोधिनी तनूः । अन्यत्समानम् ॥ २ ॥ **ॐ सूर्य्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा** ।

इदं सूर्य्याय। सूर्य इति। हे सूर्य अस्याः या पशुघ्नी गवादिनाशिनी तनूः। अन्यत्समानम्॥ ३॥ ॐ चंद्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा। इदं चन्द्राय। चंद्र इति। अस्याः या गृहघ्नी गार्हस्थ्यविरोधितनूरन्यत्पूर्ववत॥ ४॥ ॐ गंधर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्यैं यशोघ्नी तनूस्तामस्यै नाशय स्वाहा। इदं गन्धर्वाय। गंधर्व इति। हे गंधर्व गोः किरणस्य धारक प्रकाशकारक या अस्याः यशोघ्नी यशोनाशिनी तनूरन्यत्पूर्ववत्॥ ५॥ ततः स्थालीपाकेन जुहुयात्। ॐ प्रजापतये स्वाहा। इदं प्रजापतये। इति मनसा। अग्न्याहुतिनवके हुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः। अयञ्च होमो ब्रह्मणान्वारब्धकर्तृकः। तत्र आज्यस्थालीपाकाभ्यां स्विष्टकृद्धोमः। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते। तत आज्येन ॐ भूः स्वाहा इदं भूः। ॐ भुवः स्वाहा इदं भुवः। स्वः स्वाहा इदं स्वः। एता महाव्याहृतयः। ॐ त्वन्नोऽग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्यां। ॐ सत्वन्नोऽग्ने वमो भवोती नेदिष्ठोऽस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳ रराणो वीहिमृडीकꣳ सुहवो न एधि स्वाहा। इदमग्नीवरुणाभ्यां। ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्वमित्वया आसि। अयानो यज्ञं वहास्ययानो धेहि भेजꣳ स्वाहा। इदमग्नये। ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तस्तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः। ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳ श्रथाय। अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा। इदं वरुणाय। एताः प्रायश्चित्तसंज्ञकाः। ॐ प्र-

जापतये स्वाहा इदं प्रजापतये । इति मनसा । इदं प्राजापत्यम् । ततः संस्रवप्राशनम् । ततः आचम्य ॐ अस्यां रात्रौ कृतैतच्चतुर्थीहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतकममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे । इति दक्षिणां दद्यात् । स्वस्तीति प्रतिवचनम् । ततो ब्रह्मग्रन्थिविमोकः । ततः ॐ सुमित्रिया न आप ओषधयः सन्तु इति पवित्राभ्यां शिरः संमृज्य ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्यैशान्यां दिशि प्रणीतां न्युब्जीकुर्य्यात् । ततस्तरणक्रमेण बर्हिरुत्थाप्य घृताक्तं हस्तेनैव जुहुयात् ॐ देवा गातुविदो गातुं वित्वा गातुमितमनसस्पत इमं देवयज्ञꣳ स्वाहा । ततः पृथूदकपात्रस्थं आम्रपल्लवेन जलमानीय मूर्ध्नि वरो वधूमभिषिञ्चति । ॐ याते पतिघ्नी प्रजापतिघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य्यत्वं मया सह श्री अमुकदेवि इति मन्त्रेण । यात इति हे कन्यके असौ या ते तव निंदिता दोषावहा तनूः तां एनां तनूं जारघ्नीं जार उपपतिः तत् घातिनीं करोमि । सा का निन्दिता तनूः या पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी एतच्च व्याकृतमेव । अनेन चाभिषेककर्म्मणा सा त्वं मयासह जीर्य जरां प्राप्नुहि दीर्घायुर्भवेत्यर्थः । ततो वधूं स्थालीपाकं प्राशयति वरः । ॐ प्राणैस्ते प्राणान् सन्दधामि । ॐ अस्थिभिस्तेऽस्थीनि सन्दधामि । ॐ मांसैस्ते मांसानि सन्दधामि । ॐ त्वचा ते त्वचं सन्दधामि । इति मन्त्रचतुष्टयेन प्रतिमन्त्रान्तमन्नं प्राशयेत् । ततो वधूं स्थालीपाकं प्राशयति वरः । प्राणैरिति । हे कन्यके तव प्राणान्प्राणैरस्मदीयैः संदधामि संयोजयामि एवमस्थिभिस्ते अस्थीनि मांसैस्ते मांसानि त्वचा ते त्वचं संदधामि । अनेन स्थालीपाकप्राशनेन कर्मणा मया सह तव एकप्राणत्वैकास्थित्वैकमांसत्वैकचर्मत्वानि करोमीति वाक्यार्थः ॥ ततो वधूहृदयं स्पृष्ट्वा वरः पठेत् । ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितं । वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं

जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति । यत्तेसुसीम इति । हे सुसीमे शोभना सीमा अवयवसंधिर्यस्याः सा सुसीमा हे शोभनाऽवयवसंधे ते तव हृदयं वेद जानामि । किंभूतं हृदयं दिवि आकाशे चंद्रमसि च श्रितं स्थितं प्रथमतो हि स्त्रीणां चंद्रः स्वामीति नियमः । पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगंधर्ववह्निभिरिति । अतस्तदाहृतं ते चित्तमित्यभिप्रायः । इदानीं तद्धृदयं मां विद्यात् पतित्वेन जानातु किंच पश्येम शरदः शतं आवां शतं वर्षाणि पश्यावः एवं जीवेम शरदः शतं शृणुयाम शरदः शतं इयन्तं समयं चंद्रस्तव पतिरासीत् देवता तव तस्मिन्नाश्रितं इदानीमहं तव पतिरिति तव हृदयं जानातु आवामविकलेन्द्रियौ शतं वर्षाणि जीवाव इत्याशंसावाक्यार्थः । पश्येम जीवेम शृणुयाम इति तिङांतिङा भवंतीति उत्तमपुरुषद्विवचने बहुवचननम् ॥ अथ कङ्कणमोक्षणादीनि युतग्रन्थिविमोकादीनि आचारप्राप्तानि । तत उत्थाय वधूदक्षिणहस्तस्पृष्टस्रुवेण घृतफलपुष्पपूर्णेन पूर्णाहुतिं कुर्य्यात् । ॐ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृतमजातमग्निं । कविꣳ सम्राजमतिथिं जनानामासन्नापात्रं जनयन्तु देवताः स्वाहा । इति मन्त्रेण पूर्णाहुतिः । ततः स्रुवेण भस्मानीय दक्षिणानामिकाग्रहगृहीतभस्मना त्र्यायुषं जमदग्ने इति ललाटे ॐ कस्यपस्य त्र्यायुषमिति ग्रीवायां ॐ यद्देवेषु त्र्यायुषं इति दक्षिणबाहुमूले तन्नोऽस्तु त्र्यायुषं इति हृदये । एवं वध्वा अपि त्र्यायुषं कुर्य्यात् । तन्नो इत्यस्य स्थाने तत्ते इति विशेषः । तत आचार्य्याय दक्षिणां दद्यात् होत्रे च दक्षिणां दद्यात् भूयसीम ॥ इति चतुर्थीकर्म्म समाप्तम् ॥ श्रीदुर्गायै नमः ॥ शिवं भवतु ॥

समाप्ता साङ्गा विवाहपद्धतिः ।

---